तोः प्रथमः पुरुषो भवति अपिशब्दादप्रयुज्यमानेऽपि ।
स पचति तौ पचतः ते पचन्ति पच् वर्तमाना ति तस्
अन्ति अन्ति अस्मद्युष्मदोरन्यतरस्मिन्नेव सोऽपम   यु

**ष्मदि मध्यमः**   युष्मदि प्रयुज्यमाने सति धातोः
मध्यमः पुरुषो भवति अपिशब्दादप्रयुज्यमानेऽपि त्वं
पचसि युवां पचथः यूयं पचथ   **अस्मदु**।
**त्तमः**   अस्मदि प्रयुज्यमाने सति धातोरुत्तमः ।
पुरुषो भवति अपिशब्दादप्रयुज्यमानेऽपि अहं पचा
मि आवां पचावः वयं पचामः वर्तमाना मि वस् मा
स् अपि अस्य वमोर्दीर्घः   **अदाप्यो दा**
डुदाञ् दाने दाण् दाने देङ् रक्षणे दो अवखण्ड
ने दारूपाश्चत्वारः डुधाञ् दानधारणयोः धेट् पाने
धारूपौ द्वौ एषामियं संज्ञा दाधा इत्येते द्वे रूपे दासंज्ञे
भवतः अदाप् दाप् दैप् वर्जयित्वा दासंज्ञकप्रयो
जनम् दामागायतीत्यादौ दीयते च धीयते दाधा
वर्तमानान्ते सार्वधातुके यण् णकारो न णकारः
तुबन्धो च कीर्तितो यागित्यर्थः सन्ध्यक्षरान्तानामा
कारो विकरणे इत्यनयोरात्वम् दामागायति पिः
बति स्थाम्नातिजह्वातीनामीकारोऽभ्यञ्जनादाविन्याका
रस्य ईत्वम् इशाह्वादान्तुवन्यात्रिमणीत्यर्थः ञकार
इज्जनादेक भयामीत्यर्थः ङकार आत्मनेपदार्थः ण
कारो दाणोपदेश इत्यर्थः अदाविति किम् दायन्ते व्री
हयः दायन्ते भाजनानि दाप्लवणे दैप् शोधने ॥

पकार इत्यर्थः वर्तमानाआत्मनेपदंप्रथमपुरुषबहु
वचनं अन्ते सन्ध्यक्षरान्तानामाकारोविकरणे सर्व
धातुकेषुणाकारोनणकारेत्यर्थः अस्यान्यस्वरयो
रसन्धेनलोपश्चअकारलोपः **क्रियाभावो**
**धातुः** क्रियाभावयतिव्यापारं प्रतिपादयति सः
धातुसंज्ञोभवति धातुसंज्ञायाः प्रयोजनं धातोश्च
हेतावित्यादिषु भवति अस्ति जुहोति भू सत्तायां ।
अदभक्षणे हु दानादानयोः वर्तमानाति भुवः अन्ति
नाम्यन्तयोर्धातुविकरणयोर्गुणः अदः अन्ति अदादे
र्लुग्विकरणस्य अचोदेषधिसंत्रयमइतिदस्यतः जु
होतेः अति जुहोत्यादेश्चेतिलुक जुहोत्यादीनांसार्व
धातुके इति द्विवचनम् होजः इति हस्य जः नाम्यन्तयोरि
ति गुणः क्रियाभाव इति किम् भूः वा (१७) **काले** (१८)
अधिकारोयम् यतऊर्ध्वं यद्वक्ष्यामस्तत्र कालेइत्युप
तिष्ठते तासांचसंज्ञाभिः कालविशेषइत्यतःप्रागय
मधिकारः **संप्रतिवर्तमाना** संप्रतिवर्त
मानेकालेवर्तमानाविभक्तिर्भवति पचति पचतः ।
पचन्ति पच् वर्तमानातिस्तस् अन्ति अति अस्यान्य
स्वरलोपः **स्मेनातीते** स्मशब्देनयोगेसति
धातोरतीतेकालेवर्तमानाविभक्तिर्भवति इतिस्मभा
नाब्रवीति इतिस्मउपाध्यायः कथयति ब्रूञ् व्यक्तायां
वाचि कथवाकथब्रवने वर्तमानातिब्रुवः अन्ति अदा
देर्लुक ब्रुवईड्वचनादिरितीह ठकारइदमेदीर्घः ना

म्नयोरितिगुणः कथः भुवादेश्चेतीन् नकारइति ॥
लिङ्गस्यानेकान्तरस्येत्यर्थः अस्यवलोपः कथिइतिश्यते
नेधातवइतिधातुसंज्ञायांसत्यांवृत्तमानानि अवि ॥
नामन्नयोरितिगुणः **परोक्षा** धातोः
तीतेकालेपरोक्षाविभक्तिर्भवति णकारवामन्त्र
पंजहारपृथिवीबलेः जघानसमरेकंसंयएतसेइह
येनमः उक्तञ्चकरणो ह्यन्त्मरणे इन्ददिसामान्यः
परोक्षा अट् टकारआकारात्टडोइत्यर्थः चापरोक्षा
वेकोषिनसन्नक्षेप्त्रितिहिर्वं अभ्यासस्यादिव्यञ्जन।
मवशेषमितिनभ्यासलोपः अकारऋवर्णस्येत्यकार
ऋकारस्य कवर्गस्यचवर्गइतिकस्यचः होजइतिहस्य
जः हनेः अभ्यासाद्वेतिधातुहकारस्यघकारः अस्मो
पधायादीर्घोवृद्धिर्नामिनामितिजघ्नइतिवृद्धिदीर्घौ।
**भूतकरणवत्यश्च** अद्यतनादिरितिधातोः प्राक्
अकारःसभूतकरणमुच्यते भूतकरणंविद्यतेयासांताभू
तकरणवत्यः धातोरतीतेकालेभूतकरणवत्योविभक्तयो
भवन्ति ह्यस्तन्यद्यतनीक्रियातिपत्तयइत्यर्थः ह्यस्तनीमाव
त् अकरोत् अहरत् हन्त्र ह्यन्न ह्यस्तनीदि इका
रोव्यञ्जनादिस्यादिरित्यर्थः अद्यतनादिर्ह्यस्तन्यद्यतनीक्रि
यातिपत्तिश्चेतिधातोः प्रागकारागमः कृन्नःतनादेरु
रितिउविकरणः करोतेरितिगुणः ह्यन्नः अनिचावि
करणोइतिगुणः पदान्तेधुटांप्रथमइतिदस्यतः अद्यत
नीयथा अकार्षीत् अहार्षीत् सिजद्यतन्यामितिसिच

सामान्येऽस्यर्थे तेनातीतविशेषे अद्यकाधीत् अहाधीत् ।
कृत् लृ अद्यतनी दि अहालादिः सिजद्यतन्यामिति
सिच् इकारचकारौ सिचि परस्मैपदेषु सिच इति ईट् सिचो
परस्मैस्वरान्तानामिति वृद्धिः यत्र क्रियाया अतिपत्तिरनि
ष्पत्तिस्तथा विधेऽतीते काले क्रियातिपत्तिर्यथा अभोक्ष्यता
भवान् तेन सहृद्यदि मत्समीपे आगमिष्यत् भुजपालनाभ्य
वहारयोः क्रियातिपत्तिः आत्मनेस्यत अहालादिः नामिनश्चो
पधाया लघोरिति गुणः चवर्गस्य किरसवर्णे इति जस्य कः ।
आस उपवेशने स्यत अहालादिः इडागमः आशीरुके ।
भविष्यति काले आशीः भूयात् भूसत्तायां आशीर्यात्
स्थाः अस्ति भविष्यति काले श्वस्तनी कर्ता कृत् श्वस्तनी
ताशुलः अध्येता इङ् अध्ययने ङकारश्चात्मनेपदार्थः
श्वस्तनी आत्मनेपदे ता अधिपूर्वः नामन्त्यस्येति गुणः
**प्रयोगात्तत्र** प्रयोगः शिष्टप्रयोगः तस्मा
द्धातोः वर्तमानादीनां विभक्तीनां कालविशेषो भवति
भूतेऽस्मिन् काले वर्तमानाया विभक्तेर्यो विहितास्ततो मया
पास्वरादीन्यर्थः यावद्भुङ्क्ते प्रारब्धभोजनस्य भोजने इत्यर्थः भु
ज पालनाभ्यवहारयोः वर्तमाना ते स्वराद्रुधादेः परो ना
शब्दः नस्य रुधादेर्विकरणान्नलोपः चवर्गस्य किरसवर्णे
इति गस्य कः **पञ्चम्यनुमतौ** अनुमतिरनुपा
गमः अनुमतावर्थे धातोः पञ्चमी भवति एवमन्यप
देष्वपि अत्र भवति पञ्चमी तु सामि अदादेर्लुग्विकरणस्य
कृत् पञ्चमी परस्मैपदे मध्यमपुरुषैकवचने हि तना

देशः करोतेरिति गुणः असोकारः सार्वधातुकेऽगुणोऽ इ
त्वम् उकाराद्धेरिति हिलोपः तद्धि इमेनयोराशिषि
गम्यमानायां पञ्चमीतातनादेशः जीवताद्भवान् जी
वतु भवान् जीवतात् त्वं जीवतु त्वं जीव प्राणधारणे
पञ्चमीतद्धि वक्ष्यमाणे तातनल् णकारो नणोऽका
रेत्वर्थः अस्ति ईरकारादेर्नोरिति हिलोपः अका
रउच्चारणार्थः समर्थनाशिषोश्च स
मर्थनायामाशिषि च वर्त्तमानाद्धातोः पञ्चमी भ
वति पौरुषावश्यककर्मण्यध्यवसायः समर्थना अ
प्राप्तस्य विषयस्य प्राप्तीच्छा आशीः समुद्रमपि पि
बानि पर्वतमपि शिरसा धारयाणि पापाने पञ्च
मी परस्मैपदोत्तमपुरुषैकवचने आनि अस्ति पः
पिबः तिपि पिबादेशः धृङ् अवस्थाने ध्रियमाणोऽप
पुञ्जे धातोश्चरेतावितीन् नकार इति लिङ्गस्यार्थः
अस्योपधे तिवृद्धिः पञ्चमी आनि अस्ति कादिनत्वा
धातः आशिषि च लुपि चिरंजीवतु चिरंनन्दतु जी
व प्राणधारणे टुनदि समृद्धौ इदाहः दृत्त्वनासादि
त्यर्थः इकारो नकारागमार्थः अनिदन्तु नम् न
मनुखान्तु पञ्चलोप इति लोपकानां नकारागमः पञ्च
मीति अस्ति विध्यादिषु सप्तमी च वि
ध्यादिषु सप्तम्यां धातोः पञ्चमी भवति सप्तमी च वि
धिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनाप्तेविधि
ध्यादयः प्रज्ञापूर्वकं कर्मण्यध्यवसायः अधीष्ट संप्र

क्रियाविचारः प्रार्थनायामाज्ञा विधौ तावत् यावज्जीवमग्नि
होत्रं जुहुयात् सायंप्रातः सन्ध्यामुपासीत इदानीं दान।
योः सप्तमी यात् अन्ति जुहोत्यादेश्चेति लुक् जुहोत्या
दीनां सार्वधातुके इति द्विर्वचनं सप्तम्यां चेति गुणाभावः
आमन्त्रणे सप्तमी ईत अन्ति अदादेर्लुक् निमन्त्र
णे इहभुञ्जीत भवान् भुञ्जीत वा भुज पालनाभ्यवहार।
योः पञ्चमीताम् सप्तमी ईत स्वराद्युपादेः परो नश्चाद्वः
नस्य रुधादेर्विकरणान्तलोपः वर्गे वर्गान्तः आमन्त्र
णे आगच्छतु भवान् आगच्छेद्वा गम्लृ गतौ आद्यः
र्वः पञ्चमीतु सप्तमी यात् अन्ति गमिषद्यमां छः।
तिमसयुक्तः तस्याद्विर्भावः अघोषे प्रथमः इति छस्य च
यायाह्रस्य च सप्तम्याम् इति यायाहस्य इत्वम् अधीष्टे मा
णवकस्योपनयनं भवान् उपनयेत वा णीञ् प्रापणे
णो नः इति णस्य नः नाम्यन्तयोर्गुणः संप्रश्ने किमा
करणमध्यै उत छन्दोऽधीयीय वा इङ् अध्ययने अ
धिपूर्वः पञ्चमीते सप्तमी ईय अन्ति लुक् गुणः सप्त।
म्यां स्वरादाविवर्णोवर्णान्तस्य धातोरियुवाविति इयादे
शः प्रार्थनायां कन्यां प्रयच्छतु भवान् प्रयच्छेद्वा दाण्
दाने णाकारो दाणो यच्छः इत्यर्थः प्रपूर्वः पञ्चमीतु स।
प्तमी यात् अन्ति दाणो यच्छः याशाह्रस्य च सप्तम्या इति
इत्वम् क्रियासमभिहारे सर्वकालेषु म
ध्यमैकवचनं पञ्चम्याः पौनःपुन्यं भृशा
र्थो वा क्रियासमभिहारः क्रियासमभिहारे वर्तमाना

ङातोः सर्वकालेष्वतीतवर्तमानभविष्यत्स्वपञ्चम्याः
सम्बन्धिनो मध्यमपुरुषस्यैकवचने भवति लुनीहि लु
नीहि इत्येव लुनाति लुनीतः लुनन्ति अयमत्रार्थः इमा
वलाविषाम् इमेअलाविषु लुनीहि लुनीहि इत्येव अयं
लविष्यति इमौ लविष्यतः इमे लविष्यन्ति लूञ् छेद
ने नंश्यादेः श्नादीनां ह्रस्वः उभयेषामीकारो व्यञ्जना
दावदः इत्याकारस्य ईत्वम् गोचाभीक्ष्ण्ये द्विः स्यपदमि
ति लुनीहि इत्यस्य द्विर्वचनम् अन्तिप्रत्यये श्नादीनां
विकरणस्य इत्यालोपः अद्यतन्यां सिच् सिच इति ईट् इ
डागमः सिचि परस्मै स्वरान्तानामिति वृद्धिः इटश्चेटी
ति सिज्लोपः तवर्गस्य षटवर्गाट्टवर्ग इति नस्य टः अ
नउस्णत्वः **माङ्योगेद्यतनी** माङ्शब्देन
योगे सति धातोरद्यतनी भवति मा कार्षीत् माहार्षी
त् पूर्वं माधिते न मा मास्मयोगे इत्यडाद्यादिनिषेधः
**मास्मयोगे ह्यस्तनी च** मास्मशब्देन
योगे सति धातोरद्यतनी भवति ह्यस्तनी च मास्मका
र्षीत् मास्मकरोत् **वर्तमाना तितस् अ**
**न्ति सि थस् थ मि वस् मस् ते आते अन्ते**
**से आथे ध्वे ए वहे महे** त्यादयो वर्तमाना
संज्ञा भवन्ति वर्तमानासंज्ञायाः प्रयोजनम् संप्रति
वर्तमाने त्यादिषु पचति पचतः पचन्ति पचसि पच
थः पचथ पचामि पचावः पचामः पचते पचेते प
चन्ते पचसे पचेथे पचध्वे पचे पचावहे पचामहे प

वृत्यादयः असन्ध्यक्षरलोपः अस्यवमोर्दीर्घः याते य
थेइतिचेत्याकारस्यइत्वम् सप्तमी यात् या
ताम् युस् यास् यातम् यात याम् याव ।
याम ईत ईयाताम् ईरन् ईथास् ईयाथा
म् ईध्वम् ईय ईवहि ईमहि यादादयः स
प्तमीसंज्ञाभवेति सप्तमीसंज्ञायाःकःप्रयोजनम् विध्या
दिषुसप्तमीचेत्यादिषु पचेत् पचेताम् पचेयुः पचेः प
चेतम् पचेत पचेयम् पचेव पचेम पचेत पचेयाता
म् पचेरन् पचेथाः पचेयाथाम् पचेध्वम् पचेय पचे
वहि पचेमहि पच् यादादयः अन्वि यायाहृस्वसप्त
म्याइतियायाहृस्यइत्वम् यास्सुसारियामित्सु सावितिया
मित्यस्यइयमादेशः उस् इत्यस्य इउसादेशः
पञ्चमी तु ताम् अन्तु हि तम् त आनि आ
व आम ताम् आताम् अन्ताम् स्व आथाम्
ध्वम् ऐ आवहै आमहै तादयः पञ्चमीसं
ज्ञाभवन्ति पञ्चमीसंज्ञयाःकःप्रयोजनम् पञ्चम्यनु
म तावित्यादिषु पचतु पचताम् पचन्तु पच पचत
म् पचत पचानि पचाव पचाम पचताम् पचेताम्
पचन्ताम् पचस्व पचेथाम् पचध्वम् पचै पचावहै
पचामहै पच् तादयः अन्वि असन्ध्यक्षरलोपः हेर
कारादन्तेरितिहिलोपः आदाताम् आथा मादेरिति ।
आताम् आथामित्येतयोराकारस्यइत्वम् ह्य
स्तनी दि ताम् अन् सि तम् त अम् व म त

आताम् अन्त थास् आथाम् ध्वम् इ वहि
महि ॥ याद्यो ह्यस्तनीसंज्ञा भवन्ति ह्यस्तनीसं
ज्ञायाः प्रयोजनम् माङ्स्मयोगे ह्यस्तनी चेत्यादिषु अ
पचत् अपचताम् अपचन् अपचः अपचतम् अप
चत अपचम् अपचाव अपचाम अपचत अपचेताम्
अपचन्त अपचथाः अपचेथाम् अपचध्वम् अपचे ।
अपचावहि अपचामहि पच् याद्यः इकारोऽञ्जना
दिस्येति त्यर्थः पदान्ते धुटां प्रथम इति दस्य तः रसका
रयोर्विसर्गः अडागमादिः अति अस्मन्त्यस्वरलोपः आ
दाताम् आथाम् आदेरिः अस्य वमोर्दीर्घः ॥ एवमेवा
द्यतनी एवमेव याद्यः दि ताम् अन् सि ।
तम् त अम् वम् म त आताम् अन्त थास् ।
आथाम् ध्वम् इ वहि महि ॥ अद्यतनीसं ।
ज्ञा भवन्ति अद्यतनीसंज्ञायाः प्रयोजनम् माङ्योगे अ
द्यतनीत्यादिषु अपाक्षीत् अपाक्ताम् अपाक्षुः अ
पाक्षीः अपाक्तम् अपाक्त अपाक्षम् अपाक्ष्व अपाक्ष्म
अपक्त अपक्षाताम् अपक्षत अपक्थाः अपक्षाथा
म् अपग्ध्वम् अपक्षि अपक्ष्वहि अपक्ष्महि पच् या
द्यः अडागमादिः सिजद्यतन्याम् इकारचकारौ सिचि
परस्मैऽस्वर्थौ अस्य च दीर्घः दिस्योः सिच ईतीट् टका
रट्स्थेटीत्यर्थः नकारथकारयकारेषु धुट्स्थधुटी
ति सिज्लोपः अनडसिजन्त्यस्वरविद्याभ्योध्वः आन्ता
नेयानकारादित्यन्तःस्यनलोपः धुटिचवर्गस्यकि

रस्मवर्णौ पकारेग्रहणात्सतीयस्य तदर्थे इति कस्यागः
परोक्षा अट् अतुस् उस् थल् अथुस् अ अ
ट् व म ए आते इरे से आथे ध्वे ए वहे महे

अडादयः परोक्षासंज्ञा भवन्ति परोक्षासंज्ञायाः प्रयोजनम् वर्त्तमाने लोपादिषु पपाच पेचतुः पेचुः पेचिथ वा पपक्थ पेचथुः पेच पपाच वा पपच पेचिव पेचिम पेचे पेचाते पेचिरे पेचिषे पेचाथे पेचिध्वे पेचे पेचिवहे पेचिमहे पच् अडादयः टकार आकारादहो गेऽनुबन्धार्थः थलोऽलकारः थलि च सेटीत्यर्थः वर्त्तमाने। तिहि द्वे अभ्यासस्यादिर्व्यञ्जनमवशेष्यमिति चलोपः अस्योपधायेत्त्वपधादीर्घः उत्तमपुरुषैकवचने अटि णल्वल्लमोवेति तन्त्रान्तराद्वा उपधादीर्घः असंयुक्ता व्यञ्जनमध्येनादेशादेः परोक्षायामिति धातकारस्य एत्वं अभ्यासस्य लोपः थलि परे उपदेशेऽत्वत इति न न्त्रान्तराद्वा इट् थलि च सेटीति एत्वाभ्यासलोपौ

श्वस्तनी ता तारौ तारस् तासि तास्थस् ता
स्थ तास्मि तास्वस् तास्मस् ता तारौ तारस्
तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ।

तादयः श्वस्तनीसंज्ञा भवन्ति श्वस्तनीसंज्ञाया प्रयोजनम् भविष्यति भविष्यन्त्याशीःश्वस्तन्यर्था दिषु पक्ता पक्तारौ पक्तारः पक्तासि पक्तास्थः पक्तास्थ पक्तास्मि पक्तास्वः पक्तास्मः पक्ता पक्तारौ पक्तारः पक्तासे पक्तासाथे पक्ताध्वे पक्ताहे पक्तास्वहे प

ष्यामहे पच तादयः चवर्गस्य किः आशीर्यात् या
स्ताम् यासुः यास् यास्तम् यास्त यासम्
यास्व यास्म सीष्ट सीयास्ताम् सीरन् सी
ष्ठाः सीयास्थाम् सीध्वम् सीय सीवहि।
सीमहि     यादादयः आशीःसंज्ञा भवन्ति आ
शीःसंज्ञायाः प्रयोजनं भविष्यति भविष्यन्त्याशीःस्व
स्त्यम् इत्यादिषु पच्यात् पच्यास्ताम् पच्यासुः पच्याः।
पच्यास्तम् पच्यास्त पच्यासम् पच्यास्व पच्यास्म प
क्षीष्ट पक्षीयास्ताम् पक्षीरन् पक्षीष्ठाः पक्षीयास्था
म् पक्षीध्वम् पक्षीय पक्षीवहि पक्षीमहि पच या
दादयः चवर्गस्य किरसवर्णे षत्वम्     स्यसं
हितानित्यादीनि भविष्यन्ती स्यति स्यतः
स्यन्ति स्यसि स्यथः स्यथ स्यामि स्या
वः स्यामः स्यते स्येते स्यन्ते स्यसे स्येथे।
स्यध्वे स्ये स्यावहे स्यामहे     स्यसंहितानि।
त्यादीनि भविष्यन्ती संज्ञानि भवन्ति भविष्यन्तीसंज्ञ
याः प्रयोजनं भविष्यतिभविष्यन्त्याशीःस्वस्त्यम् इ
त्यादिषु पक्ष्यति पक्ष्यतः पक्ष्यन्ति पक्ष्यसि पक्ष्यथः
पक्ष्यथ पक्ष्यामि पक्ष्यावः पक्ष्यामः पक्ष्यते पक्ष्येते।
पक्ष्यन्ते पक्ष्यसे पक्ष्येथे पक्ष्यध्वे पक्ष्ये पक्ष्यावहे प
क्ष्यामहे पच स्यादयः चवर्गस्य किः षत्वम्
स्यादीनि क्रियातिपत्तिः स्यत् स्यताम् स्यन्
स्यः स्यतम् स्यत स्यम् स्याव स्याम स्यत

स्येतां स्यन्त स्यथास् स्येथाम् स्यध्वम् स्ये ।
स्यावहि स्यामहि   स्यसंद्विनानि स्यादीनि क्रि
यातिपत्तिसंज्ञानि भवन्ति क्रियातिपत्तिसंज्ञया
क्वप्रयोजनम् अद्यतन्यादिह्यस्तनमद्यतनीक्रियाति ।
पत्तिश्चेत्यादिषु अपक्ष्यत् अपक्ष्यताम् अपक्ष्यन्
अपक्ष्यः अपक्ष्यतम् अपक्ष्यत अपक्ष्यम् अपक्ष्याव ।
अपक्ष्याम् अपक्ष्यत अपक्ष्येताम् अपक्ष्यन्त अपक्ष्य
थाः अपक्ष्येथाम् अपक्ष्यध्वम् अपक्ष्ये अपक्ष्यावहि ।
अपक्ष्यामहि अद्यतन्यादिः षट्कम्   षडाद्याः
सार्वधातुकम्   षण्णामद्यतन्यादीनामाद्या
वर्तमानासप्तमीपञ्चमीह्यस्तन्यः सार्वधातुकसं ।
ज्ञा भवन्ति सार्वधातुकसंज्ञया क्वप्रयोजनम् जुहो
त्यादीनां सार्वधातुके इत्यादिषु जुहोति जुहुयात् जु
होतु अजुहोत् हुदानादानयोः वर्तमानाति सप्तमीया
तु पञ्चमी तु ह्यस्तनीदि अनि जुहोत्यादेश्चेति लुक् ।
जुहोत्यादीनां सार्वधातुके इति द्वित्वं ह्वोजः नाम्यन्तयो
रित्यादिः   इति लघुवृत्तावाख्यातप्रकर
णे परिभाषापादः प्रथमः १   प्रत्ययः परः
परिभाषेयम् इह ये केचन प्रत्यया वक्ष्यमाणास्ते प्रत्ययः
सप्रकृतेः परो भवतीति परिभाष्यते औपगवः अजा ।
कुमारी पचति पचेत् कुम्भकारः उपगोरपत्यम् वा
क्यप्रत्यय एकारो ह्रस्वार्थः वृद्धिरादौ सणे अजाया
दन्तादाप् वयसि प्रथमे इति ईप्रत्ययः ईकारो [illegible]

नेभ्योण्यः ति यान् अपि कृन् जम्भहृदः कर्मण्येव

गुप्तिज्किद्भ्यः सन् गुप गोपने तिज नि।
शाने कित निवासे एभ्यः सन्प्रत्ययो भवति जुगुप्सते।
तितिक्षते चिकित्सते अनेन सन् नकारः सन्यतोऽस्या।
र्थः चण्परोक्षेति द्वित्वं अभ्यासस्यादिव्यञ्जनमव।
शेष्यम् कवर्गस्य चवर्गः चत्वम् तेधातव इति धातु।
संज्ञायां सत्यां वर्तमाना ते अपि अप्रत्ययस्य लोपः गु
पेर्निन्दायां तिजः क्षमायाम् कितो व्याधिप्रतीकारे स
न्निष्यते मानबधदानशान्भ्योदीर्घश्चाभ्यासस्य
मान पूजायां बध बन्धने दान खण्डने शान तेजने एभ्यः सन्प्रत्ययो
भवति अभ्यासस्य च दीर्घः मानेर्विचारार्थे सन्निष्यते।
शिष्टेभ्यः स्वार्थे मीमांसते बीभत्सते दीदांसते शी
शांसते सन् द्विर्वअनादिव्यञ्जनलोपः सन्यवर्णस्ये
तिइत्वम् तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थ
त्वं स्ध्वोरिति बस्य भः अनेनाभ्यासस्य दीर्घः मनोरनु
स्वारो धुटि इत्यनुस्वारः अघोषे प्रथमः इति थ
स्य तः धातोर्वाकर्मणः समानादिच्छा।
तिनैककर्तृकात् सन्स्यो यो धातुरि।
च्छतेर्यत्कर्म तेन समैककर्तृकस्तस्माद्वा सन्भवति।
भोक्तुमिच्छति बुभुक्षते भुज पालनाभ्यवहारयोः।
भोक्तुमिच्छतीति वाक्ये कृते इच्छार्थे समैककर्तृके तु
तुम् नामिनश्चोपधाया लघोरिति गुणप्राप्तौ गुणः चवा
र्गस्य किरसवर्णे इति जस्य कः सन् स्यान्तानामनी

तित्तापकाव्रमोनिवृत्तिः तस्मिन्निवृत्ते निमित्ताभा
वे नैमित्तिकस्याप्यभावयति गुणादिकार्यमपि निवर्त
ते भुज् स इति स्थिते चत्परो हेतोति द्विर्व द्वितीय चा
तुर्थयोरिति भस्य बः चवर्गस्याकिः प्रत्वम् पूर्ववत्स
त्वत्वादिति वर्तमानात्मनेपदेन्ते अपि अस्मात्परेलो
पः पचे भोक्तुमिच्छतीति वाक्यमपि भवति ना

**म्न आत्मेच्छायां यिन्** नाम्नः कर्मण आत्मेच्छा
यां गम्यमानायां यिन् भवति पुत्रमिच्छत्यात्मनः पु
त्रीयति पटीयति अनेन यिन् इकारनकारौ यि
न्वर्णस्येत्यर्थौ यिन्वर्णस्येति ईत्वम् नेयातवा
इति धातुसंज्ञायां वर्तमानाति अपि **काम्य च**

नाम्नः कर्मण आत्मेच्छायां गम्यमानायां का
म्यप्रत्ययो भवति चकारात्पूर्वेण यिन् च पुत्रमि
च्छत्यात्मनः पुत्रकाम्यति पचे पुत्रीयति **उ
पमानादाचारे** उपमानात्कर्मण आचा
रार्थे वा यिन् भवति अपुत्रं पुत्रमिवाचरति पुत्री
यति अरथ्यं रथमिवाचरति रथीयति **का
र्तुर्यिः सलोपश्च** उपमानात्कर्तुराचा
रेर्थे वा यिर्भवति सकारस्य च वा लोपः काकः श्ये
न इवाचरति श्येनायते हंसो ब्राह्मण इवाचरति
ब्राह्मणायते उदकं पय इवाचरति पयायते पय
स्यते अनेन वा सलोपः नामिव्यञ्जनान्तादाये ता
देरिति आलोपः इकारआयन्तात्वेत्यर्थः इ

हारः क्रियासमभिहारे वर्तमानाद्धातोरेकस्वराद्धला
देर्यङाहश्चागमोभवति सचचेक्रीयितसंज्ञः पुनः
पुनर्यजति भृशंवायायज्यते पुनःपुनर्ज्वलति भृ
शंवाजाज्वल्यते पुनःपुनःकरोतिभृशंवाचेक्रीयि
ते यजदेवतापूजासङ्गतिकरणदानेषु ज्वलदीप्तौ
डुकृञ्करणे अनेनयङ्गाङ्ः चण्परोक्षेतिद्वित्वं दी
र्घोनागमान्तस्येतिदीर्घः कृञः ऋतईदन्तेचेक्रीयित
इतिईकारागमः रत्वम् चेक्रीयितान्तात् कौद्वित्वं गुण
श्चेक्रीयितेइत्यभ्यासस्यगुणः आत्मनेपदे ते गु

**पूधूपविच्छिपणिपनेरायः** गुपूरक्षणे धू
पसन्तापे विच्छगतौ पणव्यवहारेस्तुतौच पनच ए
भ्य आयप्रत्ययोभवति गोपायति धूपायति विच्छा
यति पणायति पनायते अनेनआयः **तेधात**
**वः** तेसनादिप्रत्ययान्ताः समुदायाःधातुसंज्ञाभ
वन्ति जुगुप्सते गुप्तिज्किद्भ्यःसन्पुत्रीयति नाम्नआत्मे
च्छायांयिन् शुभकाम्यति काम्येतिकाम्यः श्येनाय
ते कर्तुरायिःसलोपश्चेतिआयिः **चकास्काम्प्र**
**त्ययान्तेभ्यआम्परोक्षायाम्** चकासृदी
प्तौ कासृशब्दकुत्सायाम् प्रत्ययान्तेभ्यश्चसमुदायेभ्यः
परोक्षायांपरस्यांआम्भवति चकासांचकार कासांच
क्रे परोक्षा णप् अनेनआम् आमःकृञनुप्रयुज्यतेइ
ति आमन्तात्परःकृञ् कृञश्चण्परोक्षेतिद्वित्वं अका
रस्यवर्णस्य कवर्गस्यचवर्गः अस्यापएतिऋकारस्या

वृद्धिः पश्चाद्यणेरत्वम् अयपान्तेभ्यः जगुप्सांचक्रे जु
गीयांचकार प्रत्यात्मनःपदेषुविकाल्पम् एवं ग्रु
काम्यांचकार धूपनयांचक्रे धूपनश्चचार कर्तव्या
यिरितिचापि नाम्यादेर्गुरुमतोऽनृच्छः
नाम्यादिर्योगुरुमान्धातुस्तस्मात्परो लिट्यामाम्भ
वति अनृच्छः ऋच्छस्त्रियप्रलयमूर्ति भावयो
रित्येतेवर्जयित्वा ईहांचक्रे ईक्षांचक्रे ईहचेष्टाया
म् ईक्षदर्शनाङ्कनयोः उञ्छांचकार उञ्छआर्जवे सं
योगेगुरुत्वमिकारस्यगुरुत्वम् अनृच्छ इतिकिम्।
आनर्च्छ ऋच्छ अट् द्वित्वं अकारऋवर्णस्य अत आ
देः सर्वत्रेतिदीर्घः ऋकारेणेतिनागमः ऋच्छ ऋत इ
तिधातुऋकारस्यगुणः आसिदय्यायिदरिद्रा
भ्यश्च आसउपवेशने दयदानगति रक्षासु
अयगतौ दरिद्रादुर्गतौ एभ्यः परोलिट्यामाम्भ
वति आसांचक्रे दयांचक्रे पलायांचक्रे दरिद्रांचकार
अयगतौ परापूर्वः उपसर्गस्योऽयतावितिरस्यलत्वम् शेषं
पूर्ववत् उषविदजागृभ्योवा उषदाहे।
विदज्ञाने जागृनिद्राक्षये एभ्यःपरोलिट्याम्वा भ
वति ओषांचकार विदांचकार जागरांचकार आ
मिविदेर्वेतिगुणाभावः पक्षे उवोष विवेद जजागा
र अट् द्वित्वं उपधागुणः अभ्यासस्यासवर्णे इत्यभ्या
सस्यउवृजागर्तेः असोपधेतिवृद्धिः अभ्यासस्यह्र
स्वः भीह्रीभृहुवामामवत्तकवच्च ।

तोः सिचि वृद्धिर्भवति अद्यतन्यां परतः अकार्षीत् अहार्षी
त् अचैषीत् अनैषीत् ह्मल् ह्मल् चि चये णीञ् प्रा
पणे णीञः अद्यतनीदि सिच् सिच इति ईट् सिचि पर
स्मै इति वृद्धिः अज्ञानादिः सत्वम् अभैत्सीत् अच्छै
त्सीत् भिदिर् विदारणे छिदिर् द्वैधीकरणे इकार
रेफानुबन्धपदत्वे बन्धो विकल्पेनाणौ सिच् अञ्जना
न्तानामनिटामिति उपधावृद्धिः अचोऽघषपिटामि
ति दस्यतः अकृत अहृत अद्यतन्यात्मनेपदे न सि
च् तस्य ह्रस्वाद्दानिट इति लोपः ऋतो हृस्व इतीड
भावः सस्यानिटः षिङ्न्तान्तामुपधा।
दृदृशाः अनिटः सिङन्तात् नाम्युपधात् अदृ
शः दृशिवर्जितात् धातोः सक् भवति अद्यतन्यांप
रतः सिचोऽपवादः अविक्षत् अलिक्षत् अधुक्षत् वि
श प्रवेशने लिह आस्वादने दुह प्रपूरणे अद्यतनीदि अ
ज्ञानादिः सकककारो नाकार इति गुणाभावार्थः।
स्तीयाद्वेधपभान्तस्यातिदस्यपः षढोः कः से इति ष
स्य कः अचोऽघषपिटामिति च स्यकः सत्वम् अनि
ट इति किम् अकोषीत् कुष निष्कर्षे सिच् इट् ईट्।
इट ईटीति सिज्लोपः नाम्युपधाया इति गुणः षि
ङन्तादिति किम् अभैत्सीत् भिदिर् विदारणे नाम्यु
पधादिति किम् अधाक्षीत् दह भस्मीकरणे अद्यत
नीदि अज्ञानादिः सिच् ईट् असस्य दीर्घ इत्युपधादी
र्घः दादेर्घः तृतीयादेर्घढधभान्तस्यादिदस्यधः अधा

घ्राघिटामितिघस्यकः अहधाइतिकिम् अहासीत् इ
घ्रिट् ध्रेताम् अघ्नतीति सिच् ईट् स्त्रिट्योरागमो
कारइस्त्रकारास्यौकारागमः रत्वम् अस्यचदीर्घः ह
श्रोष्येतिधास्यघः घठोःकस्मेइतिकत्वम् अहासीदिः

श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण्कर्तरि ।

वि श्रिञ्सेवायांद्रुगतौ स्रुगतौ कमुकान्तौ प
भ्योधातुभ्यः कारितान्तेभ्यश्चचण्भवति कर्तृवाचि
स्यामद्यतन्यांपरतः अशिश्रियत् अदुद्रुवत् असुस्रु
वत् अद्यतनीदि अनेनचण् चकारःस्वापेक्षणीया
र्थः णकारोनणकारेत्यर्थः चण्परोह्नेतिद्विर्वं स्वरा
दाविवर्णोवर्णान्तस्यधातोरियुवावितिइयु उव् अचा
कमत् कमुकान्तौ उकार उदनुबन्धपृद्धिं शामिस्या
र्थः कदादित्वादात्मनेपदम् न चण् कम् द्वि
अनादिव्यञ्जनलोपः कवर्गस्यचवर्गः कारितान्तेभ्यः
अचीकरत् अजीहरत् अपीपचत् अपीपठत् डुकृञ् ।
ह्रञ् पच् पठ ऊर्वन्तेधातुभ्यः एवेदारन्ते पचन्ते पठन्ते
धातोश्चहेतौ वितिइन् असोपधेतिह्रादिदीर्घौदि चा
ण् कारितलोपः इनिकृतेस्यानिवदितिवचनात् क्र
ह पच् पठ द्वित्वं अभ्यासस्यादिव्यञ्जनमवशेष्यमि
त्यनादिव्यञ्जनलोपः अकारऋवर्णस्य कवर्गस्यच
वर्गः देजः इणसमानलोपोपधायाह्रस्वश्चणीअप
धाह्रस्वः अलोपेसमानस्यसन्वल्लघुनिचण्परे इति ।
सन्यवर्णस्येतिइत्वम् दीर्घोलघोः कर्तरि ।

चस्लुङादेशः लुकारइत्यर्थः आरत् असरत् ऋ सृ अय
ति अनेन अङ् अङिसर्त्तीरत्तीतिगुणः अतैरवर्णस्यका
रः सर्वत्राह्रस्वादिः अशिषत् शासु अनुशिष्टौ अयदिअ
नेनअङ् शासेरिङुपधायाअङ्व्यञ्जनयोरितिइत्वम् शा
सिवसिघसीनांचेतिषत्वम् परस्माइतिकिम् व्यत्यस्त
त उपवृत्तौ अद्यतन्यात्मनेपदप्रथमपुरुषैकवचने त
न सस्मानिटइतिसण् णकारोनणकारेत्यर्थः विकृति।
पूर्वौ अह्रस्वादिः कर्मव्यतिहारे आत्मनेपदं नघटोरक्
स इतिषत्वकः निमित्ताभावेयेतिसणः सकारस्यश्रव
म् इनात्मनेपदेप्रथमैकवचने पद।
गतावित्यस्मात्कर्तृवाचिन्याअद्यतन्या आत्मनेपदप्रथ
मपुरुषैकवचनेपरेइच्भवति उदपादि सत्पाम् सम
पादिकार्यम् पदगतौ अद्य त अह्रस्वादिः अनेन इच्।
चकारइचस्तलोपइत्यर्थः असोपधेतिदीर्घः इचस्तलो
पइतितप्रत्ययलोपः प्रथमैकवचनेइतिकिम् उदपत्थाः
आत्मनेपदमध्यमपुरुषैकवचनेथास् सिच् अट्स्थ
टीतिसिचोलोपः अचोञ्णितिवृद्धिः इतिदस्यतः एकव
चनेइतिकिम् उदपत्सातांम् उदपत्सत अद्यतनीताम्।
अत सिच् आत्मनेचानकारादितिअन्तइत्यस्यनलोपः।
अचोञ्णितिदस्यतः भावकर्मणोश्च धातो
रिच्भवति भावकर्मवाचिन्याअद्यतन्याआत्मनेपदप्र
थमपुरुषैकवचनेपरे भावोधात्वर्थः सचयत्रक्रिया
कर्मभवति अशायिभवता शयनमकारीत्यर्थः शी

उ. स्वप्ने अस्व त अङ्हात्वादिः अनेनइच् असोपधेतिवृद्धिः
इचस्तलोपः कर्मणियथा अकारि अचायि कृपच् अ
च त अनेनइच् असोपधेतिवृद्धिः दीर्घौ अङ्हात्वादिः
**सार्वधातुकेयण्** धातोःयण्भवति भा
वकर्मविहितेसार्वधातुकेपरे अस्यतेभवता शय्यतेभ
वता आसउपवेशने शीङ्स्वप्ने ङकारआत्मनेपदार्थः
वर्तमानाते अनेनयण् णकारोनणकारेत्यर्थः शीङः
अयिर्येइति ईकारस्यअयिआदेशः कर्मणियथा क्रिय
तेकटोदेवदत्तेन क्रियतेभारश्चैत्रेण वर्तमाना ते यण्
शिबार्ये इति इकारागमः रत्वम् **अन्विकर।**
**णःकर्तरि** धातोरन्भवति सचविकरणसंज्ञः।
कर्तृविहितेसार्वधातुकेपरे विकरणसंज्ञयाकप्रयो
जने अतिचविकरणइत्यादिश्च भवति गच्छति अस्ति भू
सत्तायाम् गम्लृगतौ अदभक्षणे वर्तमानाति अनेनअ
न् नकारोणितिचविकरणइत्यर्थः भवतेरनिचवि
करणेइतिगुणः गमेःगमिष्यमांछइतिछः नस्याद्वि।
भोवस्वरपरश्छकारइतिद्वित्वम् अचोऽघअस्थमइतिअस्य
वः अदेरदादेर्लुक् अचोघधाशीनामितिदस्यतः सार्व।
धातुकेइतिकिम् भविता भूसत्तायाम् अभ्वनीताइट्।
नाम्यन्तयोरितिगुणः कर्तरीतिकिम् पच्यते पच् ते सा
र्वधातुकयण् **दिवादेर्यन्** दिवादिगणात् य
न्विकरणोभवति कर्तृविहितेसार्वधातुकेपरे दीव्यति
सीव्यति नृत्यति दिवुक्रीडाविजिगीषाव्यवहारद्युति

तिधुषितुतन्तुसन्ताने स्तीमात्रविलेपे उकार उदनुबन्ध
प्रक्रियायामित्यर्थः ईकारोऽनुदीर्घ्ये ईदनुबन्ध इत्यर्थः धात्वा
देः षस्सः वर्तमानाति अनेन यत् नकारोऽयमोकार
स्येत्यर्थः अन्तिचविकरणे इति नियमाद्गुणाभावः ना
मिनोश्चोरकुर्छुरोर्व्यञ्जने इति इकारस्य दीर्घः   नुः
स्वादेः   स्वादेर्गणात् नुर्विकरणो भवति कर्तरि विहि
ते सार्वधातुके परे सुनोति चिनोति दुनोति षुञ् अभि
षवे धात्वादेः षस्सः चिञ् चयने टुदु उपतापे टुश्चाद्युः टुरनुब
न्धाद्युरित्यर्थः अनेन नुः अन्तिच विकरणे इति नियमा
द्वानोर्गुणाभावः नामिनोरयोर्धातुविकरणयोर्गुण इति
विकरणस्य गुणः सुनुतः सुन्वन्ति द्विरुवर्णयोऽप
रस्मा इति गुणाभावः नोर्विकरणस्येति वत्वम् सार्वधा
तुके इति किम् सोता श्वस्तनी ता गुणः कर्तरीति किम्
देवदत्तेन सूयते सोमः वर्तमाना ते सार्वधातुके यण् ना
म्यन्तानां यम्मायीति दीर्घः   श्रुवः शृ च   श्रु श्रव
णे अस्य कर्तरि विहिते सार्वधातुके परे नुर्विकरणो भ
वति श्रुवस्य शृ आदेशः शृणोति शृणुयात् शृणोतु
अशृणोत् सार्वधातुके इति किम् श्रोता श्वस्तनी ता
गुणः कर्तरीति किम् श्रूयते शब्दः वर्तमाना ते यण् ना
म्यन्तानां यम्मायीति दीर्घः   स्वराद्रुधादेः परो
नशब्दः   रुधादेर्गणस्य स्वरान्त्यतो नशब्दो विकरणो
भवति कर्तरि विहिते सार्वधातुके परे अनेनायः रुण
द्धि रुधिर् आवरणे इकाररेफौ अनुबन्धौ विक

स्येनानयौ वर्त्तमानानि अनेनस्वरात्परोनुमाद्ः घढ।
धभेभ्यस्तथोर्धोद इति तस्य धः धुटांतृतीयश्चतुर्थे इति
धस्यदः रुणद्धीति नस्य णः एवं रुन्ध्यात् सप्तमीया
त् रुधादेर्विकरणान्तलोपः वर्गेवर्गान्त इति णत्वबा
धनार्थो नस्य नः रुणद्धु पञ्चमीतु अरुणत् ह्यस्तनी
दि तस्यव्यञ्जनादिस्यादितिलोपः पदान्ते धुटांप्रथमइ
ति धस्य तः अडागमादिः एवं भिनत्ति भिन्द्यात् भिनत्तु।
अभिनत् सायनेशवत् सार्वधातुके इति किम् से।
त्ता भेत्ता नामिनश्चोपधाया लघोरिति गुणः छदपभे
भ्यस्तथोर्धोद इति तस्य धः धुटांतृतीयश्चतुर्थे इति धस्य
दः तनादेरुः तनादेर्गणादुविकरणो भ
वति कर्त्तृविहिते सार्वधातुके परे अनो बाधः तनोति।
तनुयात् तनोतु अतनोत् तनुविस्तारे अनेन उः सप्तम्या
वेति आम्यग्रे गुणाभावः नाम्यन्तयोरिति गुणः एवं स
नोति सनुयात् सनोतु असनोत् षणु दाने धात्वादेः ष
स्सः धुटि खनिसनिजनामिति आपकारस्य नः सार्वधा
तुके इति किम् सनिता श्वस्तनी ताइ नाक्र्यादेः
क्र्यादेर्गणान्नाविकरणो भवति कर्त्तृविहिते सार्वधा
तुके परे क्रीणाति क्रीणीयात् क्रीणातु अक्रीणात् डु
क्रीञ् द्रव्यविनिमये डुञाद्योडुञ्चवत्यादिमावित्यर्थः व
र्त्तमानानि सप्तमीयात् पञ्चमीतु ह्यस्तनीदि अनेनना
विकरणः नस्य सप्तम्या उभयेषामीकारो व्यञ्जनादावा
दश्नाकारस्य ईकारः सार्वधातुके इति किम् क्रेता श्वस्त

नीता अश्नाः **आनव्यञ्जनान्ताड्डौ** क्र्यादि
भ्यश्चेव्यञ्जनान्ताद्धातोः आनविकरणो भवति ह्नौ
परे नश्नाम्नः अशान मुषाण पुषाण बधान गृहा
ण पुष पुष्टौ मुष स्तेये अश भोजने बन्ध बन्धने ग्र
ह उपादाने पञ्चमी हि अनेन आन हेरकारादहन्तेरि
ति हिलोपः बन्धेरनिदत्त्वबन्धेर्नस्य लोपः ग्रहेर्ग्र
हिज्यावयीति सम्प्रसारणम् व्यञ्जनान्तादिति किम् क्री
णीहि उभयेषामीकार इति ईकारः ह्नाविति किम् अ
श्नाति **आत्मनेपदानि भावकर्मणोः** भा
वो धात्वर्थस्तस्मिन् क्रियायाः कर्मत्वेन विवक्षिते अस्मा
स्मिंश्च द्रव्यकालादौ कर्मण्यभिधेये आत्मनेपदानि।
भवन्ति आस्यते भवता शय्यते भवता आसनं क्रि
यते शयनं क्रियत इत्यर्थः कर्मणि यथा क्रियते का
टः क्रियते भारः मासमास्यते गोदोहमास्यते क्रोशं
स्वप्यते कृत्य आस् निषद् शय्यते मिकारोऽन्यत्र बन्य
मतीत्यर्थः स्वपिवचियजादीनां चेति स्वपः वकारस्या
संप्रसारणमुकारः **कर्मवत्कर्मकर्ता** क
र्मैव कर्ता कर्मकर्ता कर्मवद्भवति कर्मणि यानि का
र्याणि तानि कर्मकर्तर्यपि भवन्तीत्यर्थः कानि कार्या
णि यक् आत्मनेपदानि भावकर्मणोश्चेति इञ्च सा
र्वधातुके यक् पच्यन्ते तण्डुलाः स्वयमेव भिद्यते कु
सूलः स्वयमेव छिद्यते रज्जुः स्वयमेव अपाचि ओदनः।
स्वयमेव अभेदि कुसूलः स्वयमेव अच्छेदि रज्जुः स्वय

मेव कर्तरि रुचादिङितोऽनुबन्धेभ्यः रुचि
आदयो धातवः पठितव्याः ङित्तानुबन्धाः पञ्चम्ये तेभ्यो धा
तुभ्यो ङकारानुबन्धेभ्यश्च कर्तर्यर्थे आत्मनेपदानि भ
वन्ति रोचते दीप्यते एधते स्पर्धते आशास्ते रुचदी
प्तौ दीपी दीप्तौ ईकारो नश्चीद्त्वबन्धेत्यर्थः एध वृ
द्धौ स्पर्ध संघर्षे आङः शासु इच्छायाम् ङकारः पञ्च
म्यास्तोरोपञ्चमी इत्यर्थः ते आति शासेः अदादेर्लुक दी
पः दिवादेर्यन् रुचेः नामिनश्चोपधाया इति गुणः रुचि
चे एधा च रूप स्पर्धे आशाशासे परोक्षाप सर्वत्रात्मने।
इति गुणाभावः एधेः नाम्यादेर्गुरुमतोऽनृच्छ इत्याम् ।
स्पर्धेः शिटो रोऽबाध इत्यभ्यासस्य सकारान्तरः पकारः स
सस्वरः शिष्यते अन्यल्लुप्यते ङानुबन्धेभ्यो यथा शेते।
सूते शीङ् स्वप्ने षूङ् प्राणिगर्भविमोचने ङकारः इदार्थः
यावादेवस्यः अदिप्रदादेर्लुक् शीङः सार्वधातुके इति।
शीङ् गुणः सर्वधातात्मने इति सूत्रेण गुणाभावः षिषुप्र
सूश्च ये धात्वादेः षस्यः परोक्षाप द्विर्वचनः शरवर्णस्येति
ईकारस्य यत्वम् सूङः स्वरादाविवर्णोवर्णान्तस्येति उव्।
षत्वम् ये क्रीयितान्तात् येक्रीयितान्ताद्धातो
रात्मनेपदं स्यात् पापच्यते पापठ्यते डुपचष् पाके पा
ठ व्यक्तायां वाचि अत्यर्थं पचति अत्यर्थं पठति इति वाक्ये
कृते धातोरेकस्वराद्यङाह्वो ये क्रीयितं क्रियासमभिहारे
इति यप्रत्ययः चण्परोक्षेति द्विर्वे अभ्यासस्यादिर्व्यञ्जनम
वशेष्यम् दीर्घो नागमान्तस्येति दीर्घः आत्मनेव

आपिशब्दयोगात्मात्मनुदात्ताद्यादात्मनेपदं भवति श्येनायते।
पयायते पयस्यते नदीयते नदीवाचरति पयस्वदी।
शाहाभ्यां परस्मायैः नामिव्यञ्जनान्तादायेरादेशित्याले।
पः **इङ्ञादेरुभयम्** इङितेभ्यः स्वरितेभ्यः
ञकारानुबन्धेभ्यश्च यजादिभ्यश्च कर्तरि उभयपदं परस्मै
पदमात्मनेपदं च भवति तत्र परार्थे क्रियाफले परस्मै
पदमात्मार्थे क्रियाफले आत्मनेपदम् पाचयति ओदनं
भृत्यः सूदेन स्वाम्यर्थं पाचयते ओदनं सूदेन स्वामी पच
पचमाने प्रयुङ्क्ते धातोश्चहेतौ णिजिति इन् अस्यापयेस्तथा
हीङ्कः पाचिः इति स्थिते ते धातव इति धातुसंज्ञायां सत्यां अ
नेन वर्तमानाति ते सन्धि नाम्यन्तयोरिति गुणः पचय्।
ञकारानुबन्धेभ्यो यथा कटं करोति भृत्यः कटं कुरुते स्वा
मी डुकृञ् वर्तमानाति ते तनादेरुरिति उ विकरणः करो
ते रिति धातोर्गुणः अस्योकारः सार्वधातुके गुणो इत्यका
रस्योकारः चिनोति शाखां भृत्यः स्वाम्यर्थम् चिनुते।
स्वामी चिञ्चये वर्तमानाति ते अस्वादेः नाम्यन्तयोरिति
विकरणस्य गुणः यजादिभ्यो यथा यजन्ति याज्ञकाः या
जते यजमानः पचन्ति सूदाः पचते गृही यजदेवतापू
जासङ्गतकरणदानेषु डुपचष् पाके वर्तमानाअन्ति ते
अन्ति अस्यान्तस्य शोरसौ न लोपश्च **पूर्ववत्सन**
**न्तात्** सनः पूर्वो यो धातुस्तस्मा येनैव विधिना पर
स्मैपदमात्मनेपदमुभयपदं च भवति तेनैव विधिना
सनन्तादपि भवतीत्यर्थः बुभूषति कमोचिषते पिपा

ऋटिलमटित्वमिच्छति यथाहः अटाम्पाहात्सन् इट् अ
स्यचलोपः यस्मान्नत्वधातोरिति यलोपः अनर्द्विवचनं।
नभवति एकस्वरस्येतिकिम् आट पटोता अट् अ
द्वितीयस्यैकस्वरत्वमस्वरत्वान्नास्ति अस्योपधेतिदी
र्घः अस्यादेःसर्वत्रेतिदीर्घः दीर्घोत्परलोपः नन्व
द्राः संयोगादयोऽथ्ये स्वरादेर्यातोद्वितीयस्यैक
स्वरंस्य यः संयोगस्तस्यादयो येनकारवकारदकाररे
फास्ते नद्विरुच्यन्ते तान्वर्जयित्वाधिष्ठस्य द्विर्वचनं भ
वतीत्यर्थः अयेयकारेनबदरा द्विरुच्यन्तेएव अजिजि
षति उन्दिदिषति उज्जिजिषति अड्डिडिषति अर्चिचिष
ति अत्रत्र्यक्किन्नलागातिषु उकारः स्वरातिसूतिसू
यतीतीट्विकल्पार्थः उन्दीक्लेदने उब्जआर्जवे अड्ड अ
भियोगे अर्चपूजायाम् अजितमिच्छति उन्दितम् उ
ब्जितम् अड्डितम् अर्चितम् सन् इट् नबदरावर्जं पूर्वेण
द्वितीयस्यैकस्वरस्यजिदिजिडिचि इत्यस्य चाणरोतोति द्वि
र्वे तवर्गस्य टवर्गयोगेच टवर्गादिति दस्य डः वर्णेवर्गा
न्तइति नस्य नः औज्जिजत् औन्दिदत् औब्जिजत् आड्डिडत्
आर्चिचत् अजनं आणक्क उन्दनं उब्जनं अड्डनम् अ
र्चनम् इत्यादि अस्तात्वादिः शिष्टस्वकामिकारिता।
न्तेभ्यश्चाएकतरीतिचण् स्वरादीनां द्वितीयादेः अवर्णा।
स्याकारः औदा जि दि जि डि चि इत्यस्याद्विर्वे [illegible]
तलोपः नबदराइतिकिम् ईर्चिचिषते ईर्ष्यदर्थानाद्‌
नयोः ईर्ष्यितमिच्छति सन् इट् तिद्विर्वे अनादिव्यञ्ज

न्तलोपः कवर्गस्य चवर्गः अये इति किम् अर्यते ऋगति
प्रापणयोः कुटिलम् गच्छति सूचिसूत्रि इति यङाद्यः चेकी
यिते चेति अलः चत्परो हेति यद्विर्वं अग्रेकोऽनवर्ज्जते ।
अनादिव्यञ्जनलोपः दीर्घोनागमान्तस्येति दीर्घः पू
र्वोऽभ्यासः धातोर्द्विर्वचने कृते यः पूर्वो भागः सोऽभ्यास
संज्ञो भवति पपाच पपाठ पच् पठ परोक्षा अट् द्वि
र्वे अभ्याससंज्ञायां सत्याम् अभ्यासस्यादिव्यञ्जनमव
शेष्यम् असंयोगेति दीर्घः शिश्राय उद्राव श्रिञ् से
वायां द्रुगतौ अट् श्रि द्रु द्विर्वे अनादिव्यञ्जनलोपः
असंयोगेति वृद्धिः अभ्याससंज्ञयाकश्य योजनम् अ
भ्यासस्यादिव्यञ्जनमवशेष्यमित्यादिषु द्वयमभ्य
स्तम् धातोर्द्विर्वचने कृते यद्द्वयं धात्वभ्यासौ ।
तदभ्यस्तसंज्ञं भवति ददाति ददतः दधाति दधतः डु
दाञ् दाने डुधाञ् दानधारणयोः वर्त्तमाना अन्ति प
ञ्चमी अन्तु अन्ति जुहोत्यादेश्चेति श्लुक् जुहोत्यादीनां
सार्वधातुके इति द्विर्वे ह्रस्वः द्वितीयचतुर्थयोः प्रथ
मतृतीयाविति प्रसादः अभ्यस्तसंज्ञायां सत्याम् अ
भ्यस्तानामाकारस्यान्तलोपः लोपोऽभ्यस्तादन्तिन इ
तिनलोपः जोहूयते ह्वेञ् स्पर्द्धायां शब्दे च सम्प्रसार
णानामित्येकारस्याकारः अत्यर्थे कृयति धातोरेकस्व
रायधाद् इति यङाद्यः द्विर्वे अभ्यस्तस्य चेति ह्वयोरभ्या
भ्यासयोः सम्प्रसारणम् उकारः गुणश्चेकीयिते इति गु
णः नामिनानो ह्रस्वाचेति दीर्घः जक्षादिश्च

जक्षादिगणः अकृतद्विर्वचनोपि अभ्यस्तसंज्ञो भवति ।
जक्षभक्षहसनयोः जागृ निद्राक्षये दरिद्रा दुर्गतौ चका
सृ दीप्तौ शासु अनुशिष्टौ जक्षादिः जक्षति जागर्ति ।
दरिद्राति चकास्ति शास्ति वर्त्तमाना अन्ति अन्ति ल
क् लोपोऽभ्यस्तादन्तिनः इति नलोपः दरिद्रातेरभ्यस्ताना
माकारस्यान्त्यलोपः अभ्यस्तसंज्ञायाः प्रयोजनम् अ
भ्यस्तानामाकारस्येत्यादिषु चणपरोक्षाचेक्रीयि
तसन्नन्तेषु चणि परोक्षायां चेक्रीयितान्तस्य
सन्नन्तस्य च समुदायस्य द्विर्वचनं भवति चणि तावत् ।
अपीपचत् अपीपठत् पच् पठ् पचन्ते आश्रके पचने ।
धातोरस्वरहेतौ इति इन् अरोपधे इति दीर्घः अद्यादि अडा
दिः श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण्कर्त्तरीति चणि का
रितलोपः इति कृते स्थानिवदितिवचनाद् द्वे न पच् पठ्
द्विर्वे अभ्यासस्यादिव्यञ्जनमवशेष्यम् इत्यसमानलो
पे पूर्वधायाह्रस्वमृणीति धातोर्ह्रस्वः अलोपे समानस्य
सन्वल्लघुनि चण्परे इत्यभ्यासस्य इत्वम् लघोर्दीर्घो ल
घोरिति दीर्घः परोक्षायाम् चकार पपाच पपाठ कृ
ञ् पच् पठ् परोक्षा अट् अनादिव्यञ्जनलोपः अकार ।
ऋवर्णस्य कवर्गस्य चवर्गः अस्योपधेति वृद्धिर्दीर्घो
चेक्रीयितान्तस्य चेक्रीयते जेघ्रीयते देध्मीयते पेपीया
ते अरार्यते कृञ् घ्रा गन्धोपादाने ध्मा शब्दाग्निसंयोग
योः पा पाने ऋ गतौ स्मृत्यर्थं करोति जिघ्रति धमति पि
बति ऋच्छति इयर्ति धातोरेकस्वराद् व्यञ्जनादेश्चेक्रीयितम् ।

क्षितिय आहुः इयर्तेः सृचि सृजीति यआहुः कृञ अटत ई
दन्तस्येक्रीयितयन्तायीति ईकारः आप्योरीति आकार
स्येईकारः पिवतेः दामागायतीति ईकारः इयर्तेः चे
क्रीयितेचेति धातोर्गुणः चेक्रीयितान्तस्य धातु अनेन।
क्रीत्रीप्सीपीयेद्विर्वे अनादिव्यञ्जनलोपः गुणश्चेक्री
यितेइत्यभ्यासस्यगुणः द्वितीयचतुर्थयोःप्रथमतृ
तीयाविति च स्यगः पश्चदः कवर्गस्य चवर्ग इति कस्य
चः गस्य जः इयर्तेः येइत्यस्यानादिव्यञ्जनलोपः दी
र्घोनागमान्तस्येति दीर्घः सन्नन्तस्य शनीप्सति आ
अटिटिषति अरिरिषति इत्यत्रगतौ अति सूर्वेः णाकार
इणोगाइत्यर्थः अटपटगतौ ऋगति प्रापणयोः प
यतमिच्छति अटितं अर्तमितिवाक्ये कृते धातोर्वा
कर्मणस्तमन्तादिति सन् इणः इवर्णात द्विश्चिश्रीयी
ड इति इडभावः अटेः इडागमासार्वधातुकस्येति इडु
स्यच्छतेः अटतेह्नदू नइतीडभावे प्राप्तेस्मिपूङ्घ्वपू
कृगृ दृधृप्रच्छांसनीतिइडू आदेशणः ततोद्विर्व इष
अटिष अरिष इति स्थिते अनेन अटिरिइति द्विर्व सन्य
तोस्येति इत्वम्    जुहोत्यादीनां सार्वधातुके
जुहोत्यादीनां हुदानादानयोरित्यत्रगणपठितमाना
धातूनां सार्वधातुके परे द्विर्वचनं भवति जुहोति बि
भेति जिह्रेति हुदानादानयोः ञिभीभये ह्रीलज्जायां।
वर्तमानाति अभ्विजुहोत्यादेश्चेतिलुक अनेन द्विर्वह्र
स्वः होजः द्वितीयचतुर्थयोरितिभस्यबः नाभ्यन्तयोः

रितिगुणः सार्वधातुकेइतिकिम् होता स्वपनीता

**अभ्यासस्यादिव्यञ्जनमवशेष्यम्** अभ्यासस्य यदादिव्यञ्जनं तदवशेष्यं स्यादन्यम् अनादिव्यञ्जनंलो प्यम् पिपठति पिपतति यजदेवतापूजासङ्गतकरण दानेषु पच यियक्षति पिपक्षति सन् यजेःभ्र स्जादीनांषः षढोःकःसे पचेःचवर्गस्यकिःद्वित्वं अने नचकारजकारयोर्लोपः सन्यवर्णस्येतीत्वम् **शि रोघोषः** अभ्यासस्याघः अघोषःशिरसःसोऽवा शिष्टःस्यात् शिष्टेलोप इत्यर्थः चस्कन्द अघोष टि ष्ठेव तस्तम्भ पस्पर्श स्कन्दिर् शोषणे ष्ठिवु तरणे ष्ठि वुनिरसने स्तम्भ सौत्रोधातुः उकार उच्चारणार्थः स्प र्शसंस्पर्शे परोक्षायाम् द्वित्वे अनेनकचटतपाः स्युरन्ये षांव्यञ्जनानांलोपः स्तम्भेःवर्गेवर्गान्त इतिनस्यमः स्कन्देः अभ्यासस्यकवर्गस्यचवर्गः द्वितीयचतुर्थयोरि ति स्पष्टः **द्वितीयचतुर्थयोःप्रथमतृतीयौ**

अभ्यासस्थयोर्द्वितीयचतुर्थौ तयोर्यथासंख्यं प्रथ मतृतीयावादेशौ भवतः चखान चिच्छेद टिष्ठेव त स्थौ पफाल जघास जघान डुढौके दध्यौ बभौ खनु अवदारणे छिदिर् द्वैधीकरणे ष्ठिवु निरसने ष्ठागतिनि वृत्तौ यान्तादेः घःसः नास्निस्पर्शेतितापकाल् दस्यघःक निघातौ अदभक्षणे तस्यवापरोक्षायामिति घस्लृआ देशः ढौकृगत्यर्थः डुधाञ् दानधारणयोः भादीनामहद्वित्वे अनेन खछठथफानांकचटतपाः अ

भ्यासस्य ह्रस्वः पचइत्यस्मादेर्णौइतितन्वान्नगान्न एधेइत्येत।
योस्तालव्ययोस्तालव्यइकारः डौञौ इत्येतयोरोष्ठ्ययोरोष्ठ्यउका
रः द्वितीयचतुर्थयोः प्रतिषेधः ऋकारस्य वर्णस्य
अभ्यासस्य ऋवर्णस्य ऋकारऋकारयोरभ्यासाकारादेशो भव
ति चकार जगार क्लिन्नस्पतिकृन्नु रुहुनिवारणे कुष्मा
मयोः अट् द्विर्वं अनेन ऋवर्णस्य अकारः कृपेकल्पित्वमि
च्छतिमतं कृपेरोलइतिकृतेः लकृतिः ऋकारस्य लृकारः
चलारो ऐ तेति क्लृपृ द्विर्वं अनादिव्यञ्जनलोपः ऋकारलृका
रयोः सावर्ण्यादनेनाभ्यासस्य लृकारस्य अकारः तस्य स्वत्यव
र्णस्येति इत्वम् चिक्लृपस्व इतिस्थिते वर्तमानाति अन्ति अस
ख्यलरलोपः दीर्घइणःपरोक्षायामगुणे इणग
ताविस्याभ्यासस्य दीर्घो भवति परोक्षायां यः अगुणेः अ
स्मयस्मिन्परे इयतुः इयुः परोक्षा अतस् उस् स्वरविधिः
स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने इत्यादेर्द्विर्वं पश्चादिण
श्चेतियत्वम् अनेनाभ्यासस्य दीर्घः परोक्षायां चेति गुणा
भावः देवदत्तेन ग्रामः ईये परोक्षाप्राप्त्यात्मनेपदं अस्या
देः सर्वत्र अभ्यासस्य आदिरकारस्य दीर्घो भवति स
र्वस्यां परोक्षायां सगुणायां सगुणायां वा परतः आट आट
तुः आटुः अटपटगतौ अट् अतस् उस् द्विर्वं अनादिव्य
ञ्जनलोपः अनेनाभ्यासस्य दीर्घः धातोरस्योपधाया इति दीर्घः
तस्मान्नागमः परादिरन्तस्संयोगः तस्मादा
कारात्परनदीर्घायः परस्यादेर्नकारागमो भवति अन्त
श्चेत् संयोगः यदि धातोरन्तः संयोगो भवति आनञ्ज आन।

ञ्जतुः आनञ्जतुः आनञ्जुः आनर्च आनर्चतुः आनर्चुः अञ्जूव्य
क्तिम्रक्षणगतिषु अर्चपूजायाम् परोक्षाअट् अतुस् उस्
द्वित्वं अनादिव्यञ्जनलोपः पूर्वेणदीर्घः तस्मादनेन नागमः
अतश्चेत्संयोगाद्इतिकिम् आट आटतुः आटुः ऋकारेच
तस्मादकारान्नुतदीर्घात् ऋकारेपरेनकारागमोभवति
आनृधतुः आनृधुः ऋधु वृद्धौ आनर्धः परोक्षा अतुस्
उस् द्वित्वं अकारऋवर्णस्य अस्यादेःसर्वत्रेतिदीर्घः अने।
न नागमः अश्नोतेश्च तस्मादकारान्नुतदीर्घात्परस्य।
अश्नूव्याप्तावित्यस्यादिर्नागमोभवति आनशे अश्नूव्याप्तौ।
परोक्षाएद्वित्वं अस्यादेःसर्वत्रेतिदीर्घः अनेननागमः भ
वतेरः भूसत्तायामित्यस्यपरोक्षायामभ्यासस्याद्यस्य
अकारादेशोभवति बभूव परोक्षाअट् द्वित्वं द्वितीयच
तुर्थयोरितिभस्यबः अनेनऊकारस्यअकारः भुवोवोन्त
तिवकारागमः परोक्षायामितिकिम् अभूवति भविताभि
ष्यति अत्र उवर्णात्पादिभ्यश्चेतिइडभावः निजिविजि
विषांगुणःसार्वधातुके णिजिर् शौचपोषणयोः
विजिर् पृथग्भावे विष्लृव्याप्तौ एषामभ्यासस्यगुणोभवति
सार्वधातुकेपरे नेनेक्ति नेनिक्तात् नेनेक्त अनेनक् वे
वेक्ति वेविक्तात् वेवेक्त अवेवेक् वेवेष्टि वेविष्टात् वेवेष्ट
अवेवेट् वर्तमानाति सप्तमीयात् पञ्चमीतु ह्यस्तनीदि।
ह्यस्तन्यामड्डागमादिः अन्ति जुहोत्यादेश्चेतिलुक् जुहोत्यादीनां
सार्वधातुकेइतिद्वित्वं अनेनाभ्यासस्यगुणः धातोरुपधायागुणः
याप्रत्ययेसप्तम्यांचेतिगुणाभावः व्यञ्जनाद्विस्योरितिदिलोपः

विविक्तवर्गस्यघटेतिनस्यात्: द्वेषायच्छोतिष स्यत्वम् वावि
तामेइतिउस्यात्: निजिविजोःश्लौ चवर्गस्यकिरसवर्णेइ
तिकत्वम् सार्वधातुकेइतिकिम् निनेज्ज विवेज्ज विवेष
**भृञामित्** डुभृञ्धारणपोषणयोः ओहा
ङ्गतौ माङ्माने एषामभ्यासस्यान्त्यस्यइत्वंभवति सा
र्वधातुकेपरे बिभर्ति बिभृयात् बिभर्तु अबिभः ति या
त तु दि ह्रस्वत्वमङ्गात्वादिः अन्वि जुहोत्यादेश्चेतिश्लु
क् जुहोत्यादीनामितिद्विर्वं गुणोह्रस्वत्वंच अकारस्य
वर्णस्य अनेनइत्वम् गुणःस्तन्मयोंचेतिगुणाभावः व्यञ्ज
नादिस्यादितिदिलोपः रेफस्यविसर्जनीयः जिहीते जि
हीत जिहीताम् अजिहीत मिमीते मिमीत मिमीताम्
अमिमीत ङानुबन्धत्वादात्मनेपदम् वर्तते मम ईत
पञ्चताम् ह्रस्व ते ईतप्रत्यये अभ्यस्तानामाकारस्य इ
त्यालोपः अन्यत्र उभयेषामीकारोव्यञ्जनादावइतिईका
रः सार्वधातुकेइतिकिम् बभारजद्दे ममे अट् प सन्य
तोवेत्यालोपः **अर्तिपिपर्त्योश्च** ऋसृगतौ पृपाल
नपूरणयोः इत्येतयोरभ्यासस्यसार्वधातुकेपरेइत्वंभवति
इयर्ति ॥ इयृयात् इयर्तु ऐयः ति यात् तु दि अन्वि
जुहोत्यादेश्चेतिश्लुक जुहोत्यादीनामितिद्विर्वं अनेनाभ्या
सस्यइत्वम् अभ्यासस्यासवर्णेइतिइय् ह्रस्वत्वमकारस्य
वर्णस्येतिऋकारस्याकारः तस्यानेनइत्वम् स्वरादीनांवृ
द्धिरादेशेनवृद्धिःइकारस्यैकारः नाम्यन्तयोरितिगुणः व्यञ्जा
नादिस्यादितिदिलोपः तस्यविसर्जनीयः सन्नयोंचेतिगुणाभावः पि

पर्तिं पिपूर्यात् पिपर्त्ति अपिपः सन्नम्या उरोष्ठ्योपधस्य चेत्वा
त् तस्य नामिनो र्वोरिति दीर्घः सार्वधातुक इति किम् आ
रपपार परोक्षायामृद्वृद्धिः **अवर्णस्य** सन्निमित्तेऽभ्या
सस्यावर्णस्य इत्वं भवति पिपक्षति यियक्षति पच
यज् पक्तुमिच्छति यष्टुमिच्छति धातोर्वेति सन् चपयो
र्द्वेति द्वित्वे अनादिव्यञ्जनलोपः अनेनाभ्यासस्येत्वम्
चवर्गस्य किः षत्वम् वर्तमाना ति अन्ति असन्ध्यन्तरलोपः
यजेः स्नादीनां षः तस्य षढोः कस्से इति कः अवर्णस्ये
ति किम् बुभूषति सन्निमित्तस्येति किम् पापचिषते अ
त्यर्थं पक्तुमिच्छति इति यङन्ताद्रः द्वित्वे दीर्घोऽनागमान्तस्येति
दीर्घः पुनः सन् इट् अस्य च लोपः यस्यानन्त्यधातोरिति य
लोपः **उवर्णस्य जान्तस्थापवर्गपरस्यावर्णे**
सन्निमित्तस्याभ्यासस्य उवर्णान्तस्य जान्तस्थापवर्गपरस्य
इत्वं भवति नेजान्तस्थापवर्गा यदि अवर्णपरे भवन्ति जिजा
वयिषति यियावयिषति रिरावयिषति लिलावयिषति ।
पिपावयिषति बिभावयिषति मिमावयिषति जुङ् मोक्षे
धातुः पुमिमूषते क्षमाहे लूञ् छेदने पूङ् पवने भू सत्ता
यां मूञ् बन्धने जवमाने श्रयोक्तुमिच्छति पवं श्रवन्ते ।
सवते लुनन्त पुनन्ते भवन्ते सवमाने धातोरप्यद्वेनाविति
इन् वृद्धिः सन् इट् इनि कृतं स्थानिवदिति स्त पुक लूप् ।
भू मू द्वित्वे अनेन उवर्णस्य इत्वम् **गुणश्चेक्रीयिते**
चेक्रीयिते परे अभ्यासस्य नामिनो गुणो भवति चेचीयते ।
लोलूयते चिञ् चये लूञ् छेदने भृशं चिनोति लुनाति ॥

यथाहुः द्विर्व अनेनाभ्यासस्य गुणः नाम्यन्तानां यङ्यायीति
दीर्घः **दीर्घोनागमान्तस्य** यङ्यभ्यासस्यागमोन्ते।
नास्ति तस्य दीर्घो भवति चेक्रीयिते परे पापच्यते पापठ्यते
अनागमान्तस्येति किम् यंयम्यते यमु उपरमे अत्यर्थं य
च्छति यथाहुः द्विर्व अतोन्तोनुस्वारोनुनासिकेति अनुस्वा
रागमः **वञ्चिस्रंसिध्वंसिभ्रंशिकसिपतिपा
दिस्कन्दामन्तेनी** वञ्चु गत्यर्थः स्रंसु ध्वंसु भ्रंसु अ
वस्रंसने कस गतौ पत्लृ गतौ पद गतौ स्कन्दिर् शोष।
णे एषामभ्यासस्य नी आगमो भवति चेक्रीयिते परे वनी
वच्यते सनीस्रस्यते दनीध्वस्यते बनीभ्रश्यते चनीकस्य
ते पनीपत्यते पनीपद्यते चनीस्कद्यते अत्यर्थं वञ्चति।
स्रंसते ध्वंसते भ्रंशते कसति पतति पद्यते स्कन्दति य
थाहुः अतिदत्त्व चेत्यनुषङ्गलोपः **अतोन्तोनुस्वारो
नुनासिकान्तस्य** अनुनासिकान्तस्य धातोर्योभ्यासस्त
स्य अतः अकारान्तस्यानुस्वारागमो भवति चेक्रीयिते परे।
बम्भज्यते तन्तन्यते चङ्क्रम्यते भण भाषार्थः तनु विस्तारे
क्रमु पदविक्षेपे अत्यर्थं भणति तनोति कुटिलं क्रामति य
थाहुः द्विर्व अभ्यासकार्यं च अनेनानुस्वारागमः तस्य व
र्गे वर्गान्तः **जपादीनां च** जप मानसे जभ जृम्भि जभी
गात्रविनामे दह भस्मीकरणे दन्श दशने भञ्जो आमर्दने
पश गतौ पतेजपादयः एषामभ्यासस्यानुस्वारागमो भ
वति चेक्रीयिते परे जञ्जप्यते जञ्जभ्यते दन्दह्यते दन्द
श्यते बम्भज्यते पम्पश्यते गर्हितं जपति जभति दहति।

दन्दशीति भजति पसति यथाह्नः अनेनाभ्यासस्यानुस्वारः द
ंशिभञ्ज्योः अनिदनुबन्धेतिनलोपः **चरफलोरुत्प**
**रस्यास्य** चरगत्यर्थः फलनिष्पत्तौ अनयोरभ्यासस्य
चेक्रीयितेपरे अनुस्वारागमोभवति अभ्यासात्परस्याका
रस्योत्वंचभवति चञ्चूर्यते पम्फुल्यते गर्हितंचरति स्व
फलदचरति यथाह्नः अत्यर्थंफलतियथाह्नः अनेनाभ्या
सस्यानुस्वारागमः अकारस्यचउत्वम् चरेःनामिनोर्वो
रितिदीर्घः वर्णैवर्गान्तः **ऋमतोरी** ऋकारवतोभ्या
सस्यचेक्रीयितेपरे रीआगमोभवति नरीनृत्यते दरीदृ
श्यते चरीकृष्यते नृतीगात्रविक्षेपे दृशिर् प्रेक्षणे कृष
सामर्थ्ये अत्यर्थंनृत्यति पश्यति कल्पतेयथाह्नः अनेन
रीआगमः अकारऋवर्णस्य कृपेरोलः इतिरस्यलः १
ऋकारस्यचलृकारः **रिरौचलुकि** चेक्रीयितस्यलु
किसति ऋमतोभ्यासस्य रीआगमोभवति रिरौच नृ
रीनर्ति नरिनर्ति नर्नर्ति नृत अत्यर्थंनृत्यति यथाह्नः ता
स्यवाचेक्रीयितस्येतिलुक् अनेनरिरागमः **अलोपे**
**समानस्यसन्वल्लघुनिचङ्परे** समानस्यसमा
नसंज्ञकस्यालोपेलोपाभावेसति अभ्यासस्यलघ्वक्ष
रेपरेसन्वत्कार्यंभवति इनिचङ्परेपरतः अचीकरत्
अपीपचत् हलिदीर्घो अयादि चङ्कारितलोपः इति
कृतेस्यानिवदिति कृपवृद्धिर्वे इत्यसमानलोपेति उप
धाह्रस्वः अनेनसकृज्ज्ञावान्तस्यवर्णस्येतिह्रस्वम् दीर्घो
लघोः अलोपेसमानस्येतिकिम् अचकथत् कण्ठ स्था

वादेश्चेतिइन् अस्यचलोपः **दीर्घोलघोः** लघुन्यन्तरे
परेऽभ्यासस्यलघोर्दीर्घोभवति इनिचण्परेपरतः अचू
चुरत् चुरस्तेये चुरादेश्चेतिइन् उपधायागुणः इ चणि चु
र् द्विर्व कारितलोपः स्यसमानेतिह्रस्वः अनेनाभ्यास
स्यदीर्घः **अत्वरादीनाञ्च** जित्वरासंभ्रमे प्रथ प्रख्या
ने म्रद मर्दने स्पश बाधन स्पर्शनयोः स्मृ चिन्तायाम् दृ
विदारणे स्तृञ् आच्छादने एषामभ्यासस्य अकारादेशोभ
वति इनिचण्परेपरतः ऋकारस्य च अकारः सन्यवर्णस्ये
ति इत्वबाधनार्थः अतत्वरत् अपप्रथत् अमम्रदत् अ
पस्पशत् असस्मरत् अददरत् अतस्तरत् त्वरमा
णंप्रयुक्तं प्रथमानं म्रदमानं स्पशमानं स्मरन्तं दृणन्तं
स्तृणन्तं इन् इ चणि कारितलोपः स्यसमानेतिह्रस्वः
त्वर प्रथ म्रदां मा ह्रस्वनुबन्धानां ह्रस्वः अनेनाभ्यासस्य अत्वम्
स्पशोः स्तृणातेश्च शिड् इति रोलोपः **गणेरीच** गणसं
ख्याने इत्यस्य इनिचण्परेपरतः अभ्यासस्य ईकारोभ
वति ईकारस्य अजगणत् अजीगणत् चुरादेश्चेतिइन्
अस्यचलोपः इ चणि द्विर्व अनेन अकार ईकारौ **इ
तोलोपोभ्यासस्य** इतउत्तरं यद्वक्ष्यामस्तत्राभ्यास
स्य लोपोभवति इत्यधिक्रियते आपादपरिसमाप्तेरयम
धिकारः **सनिमीमादारभलभशकपतपदा
मिस्वरस्य** मीइति मीञ् हिंसायां डुमिञ् प्रक्षेपणे।
इतिवा माइति मामाने माङ् माने मीञ् प्रतिघाते इति
वा दा इति दासंज्ञाकाः रभ राभस्ये डुलभष् प्राप्तौ प्रा

न्दघासो पल्लृ गतौ पद्लृ गतौ एषां स्वरस्य स्थाने इस् आ देशो भवति अभ्यासलोपश्च सनि परे मित्सति मित्सते दित्सति धित्सते आरिप्सते अचोऽधेऽधपम इति भस्य पः लिप्सते शिक्षति पित्सति पित्सते मातुमिच्छति दातुं धातुं मातुं लब्धुं शक्तुं पतितुं पत्तुं धातोर्वेति सन् द्विर्व अनेन स्वरस्य इस् अभ्यासस्य च लोपः मीमादाइत्यनेनास स्येसार्वधातुकेनइति सस्य तः अन्यत्र स्कोः संयोगाद्योरन्ते चेति सलोपः **आप्नोतेरी** आप्लृ व्याप्तावित्यस्य सनि परे स्वरस्य ईत्वं भवति अभ्यासलोपश्च ईप्सति आप्तुमिच्छति सन् अनेन आकारस्य ईत्वम् अभ्यासलोपश्च **दम्भेरिच्च** दम्भ दम्भे इत्यस्य सनि परे स्वरस्य इत्वं भवति चशब्दात् ईत्वं च धिप्सति धीप्सति दम्भितुमिच्छति सन् दम्भेरनिटि सनि अनुषङ्गलोपः अनेनाकारस्य इत्वं ईत्वं च। अभ्यासलोपश्च तृतीयादेर्घढधभान्तस्येति दस्य धः अचोघेश्चिटामिति भस्य पः अस्यापि आत्मवात् इत्यते इत्वं ईत्वं च अभ्यासलोपश्चनेप्सते दिदम्भिषति **दिदीदयतेः परोक्षायाम्** देङ् रक्षणे इत्यस्य परोक्षायां परस्यां दिगि आदेशो भवति अभ्यासलोपश्च दिग्ये दिग्याते दिग्यिरे यस्वर्णस्येति यः **इति लघुसारस्वतव्याख्याने प्रकरणे द्विर्वचनपादस्तृतीयः अथ ओं सपरस्वरायाः संप्रसारणमन्तस्थायाः** अधिकारोऽयम् इत उत्तरं यदुक्तम् तत्र सपरस्वरसहिताया अन्तस्थायाः संप्रसारणं भवतीत्यधिक्रियते सन्ध्यक्षरान्तानामाकारोऽविकरणे इत्यतः।

प्रागयमधिकारः ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनाञ्च। ग्रहउपादाने ज्यावयोहानौ वेञ् त न्तुसन्ताने वेञोवयिः व्यधताडने वशकान्तौ व्यचसम्भवे। ओव्रश्चूछेदने प्रछज्ञीप्सायाम् ओव्रश्चूछेदने भ्रस्जपाके एषामन्त्यस्यायाः सस्वरायाः संप्रसारणंभवति ग्रहणोप्रत्ययेपरे गृह्यते। जीयते सार्वधातुकेयण् अनेनसंप्रनाम्यन्तानांयस्यायी तिदीर्घः ऊयतः ऊयतः वेञ्तन्तुसन्ताने अनेन उत् वे ञोवयिः संप्र द्विर्वे विध्यते उच्यते विच्यते पृच्छ्यते वृ श्च्यते भृज्ज्यते यण्संप्रश्नः भृटोत्वतीयइतिसस्यदः नस्यतवर्गस्थटेतिजः जरीगृह्यते जेजीयते वेविध्यते वे विच्यते परीपृच्छ्यते वरीवृश्च्यते बरीभृज्ज्यते ग्रहधातोः गृ ह्णाति जिनाति विध्यति विचति पृच्छति वृश्चति भृज्ज ति धातोरेकस्वरेतिपचाद्वः अनेनसंप्र द्विर्वे ऋमतोरीग्र कारऋवर्णस्य अन्यत्रगुणश्चेकीयतेइतिगुणः स्वपिव चियजादीनांयण्परोक्ताशीष्षु जिष्वप्शयने वच भाषणे अनयोः तथायजादीनां यजदेवताप्रजासङ्ग तिकरणदानेषु टुवपबीजसन्ताने वहप्रापणे वेञ् त न्तुसन्ताने वेञ्संवरणे व्हेञ्स्पर्धायांशब्देच वदव्यक्ता यांवाचि वसनिवासे टुओश्विगतिवृद्ध्योः एषांचान्त्यस्या याः सस्वरायाः संप्रसारणंभवति यणि परोक्तायां आ शिषिचाशीर्णायांपरतः सुप्यते उच्यते इज्यते उप्यते उह्य ते ऊयते संवीयते आहूयते उद्यते उष्यते शूयते नेयण् अनेनसंप्र नाम्यन्तानांयस्यायीतिदीर्घः परोक्तायाम्।

सुषुपतुः सुषुपुः ऊचतुः ऊचुः ईजतुः ईजुः ऊपतुः ऊपुः
ऊहतुः ऊहुः संविव्यतुः संविव्युः जुहुवतुः जुहुवुः ।
ऊ दतुः ऊदुः ऊषतुः ऊषुः अतस् उस् संप्र ह्विर्वे ञेञः
सन्ध्यक्षरान्तानामाकारः स्वरादाववर्णोत्सृष्टु वसेःशा
सि वसीति सस्यषः ञेञः यश्वासीयेति यः आशिषि स्या
त् उच्यात् इज्यात् उप्यात् उह्यात् ऊयात् संवीयात् आहू
यात् उद्यात् उष्यात् सुप्यात् आप्रीयात् संप्रनाम्यन्तानां
यस्यायीतिदीर्घः आशिषिचपरस्मै इति गुणाभावः **परो**
**क्षायामभ्यासस्योभयेषाम्** उभयेषां यजादीनां
स्वपादीनां च परोक्षायां परस्मै अभ्यासस्य संप्रसारणं भव
ति सगुणार्थं वचनम् जिज्यौ उवाय विव्याय उवाथ वि
व्याथ वव्रश्च सुष्वाप उवाच इयाज उवाप उवाह विव्या
य उवाद उवास अट् अभ्यासस्य संप्र जिनातेः आकाराद
टौ सन्ध्यक्षरे चेत्यालोपः ञेञो न व्यतेः परोक्षायामि
त्यात्वं न भवति सन्ध्यक्षरान्तानामित्यात्वप्राप्तम् अयीपयेति वृद्धिः
अभ्यासे पपादीर्घः **व्यथेश्च** व्यथभयचलनयोः अस्य परोक्षायां परस्मै अभ्या
सस्य संप्रसारणं भवति विव्यथे विव्यथाते विव्यथिरे अ
नेनाभ्यासस्य संप्र **नवेञ्योरगुणोच** वेञ् तन्तुसन्ता
ने टुओश्वि गतिवृद्ध्योः अनयोः परोक्षायामगुणे सगुणेऽ
वाप्रत्यये परे संप्रसारणं न भवति ववौ ववतुः ववुः शि
श्वाय शिश्वियतुः शिश्वियुः **स्वपिस्यमिव्येञां वेकी**
**यिते** ञिष्वप् शयने स्यम स्वन शब्दे व्येञ् संवरणे एषां
वेकीयिते परे संप्रसारणं भवति सोषुप्यते सेसिम्यते वे।

वेवीयते अत्यर्थं स्वपिति स्यमति व्ययति यथाहः अनेन संप्रा
द्वित्वं गुणश्चेक्रीयिते स्वपेःषत्वम् सेऽसोनाम्यन्तानां यस्मा
यीति दीर्घः **स्वापेश्चणि** स्वपेर्णिन्तस्य णिपरे अन्तस्था
याः संप्रसारणं भवति असूषुपत् स्वपन्तं प्रायुङ्क्त इन् अ
स्वापयेति दीर्घःद्विचणि अनेन संप्र कारितलोपः द्वित्वं दी
र्घोलघोः अडागमादिः **ग्रहिस्वपिप्रच्छां सनि** ग्रहउपा
दा निषुषुप्सते प्रच्छ ज्ञीप्सायाम् एषां सनि
परे अन्तस्थायाः संप्रसारणं भवति जिघृक्षति सुषुप्सति ।
पिपृच्छिषति गृहीतुमिच्छति स्वप्तुम् प्रष्टुम् धातोर्वा
तिसन् संप्रसारणे ढः तृतीयादेर्घढधभान्तस्येति गस्य घः द्वि
र्वचनं ग्रहगुहोः सनीति इडभावः स्मिपूङ्ज्वशूइति इट् **चा**
**यः कीचेक्रीयिते** चायृ पूजानिशामनयोरित्यस्य चे
क्रीयिते परे कीआदेशो भवति चेकीयते अत्यर्थं चायते
इति यथाहः अनेन कीआदेशः द्वित्वं गुणश्चेक्रीयिते
इति गुणः चेक्रीयिते इति किम् चायते **प्यायः पी परो**
**क्षायाम्** चेक्रीयितग्रहणमनुवर्तते स्फायी ओप्यायी वृ
द्धावित्यस्य परोक्षायां परतः पीआदेशो भवति पेपीयते
अत्यर्थं प्यायते यथाहः अनेन पीआदेशः द्वित्वं गुणश्चेक्री
यिते आपिप्ये आपिप्याते आपिप्यिरे अनेन पीआदेशः द्वित्वं ह्रस्वः य
इवर्णस्येति यः परोक्षायामिति किम् प्यायते **श्वयतेर्वा**
टुओश्वि गतिवृद्ध्योरित्यस्य चेक्रीयितपरोक्षयोः परयोः संप्र
सारणं वा भवति शोशूयते शेश्वीयते अत्यर्थं श्वयति य
थाहः अनेन वा संप्र द्वित्वं शुशाव शुशुवतुः शुशुवुः शि

श्वाय शिश्वियतः शिश्वियुः अटि वृद्धिः स्वरादाविवर्णोति इ
युवौ **कारिते च संश्चणोः** श्वयतेरन्तस्थायाः संप्रसारणं
वा भवति कारिते सन्परे चण्परे च परतः शुशावयिषति श्वय
न्तं प्रयोक्तुमिच्छति इन् सन् संप्र इट् वृद्धिः इनि कृतं स्थानिव
दिति शु द्विर्वचने पक्षे शिश्वाययिषति इन् सन् इट् वृद्धिः शि
श्वाययिषति अशूशवत् श्वयन्तं प्रायुङ्क्त इन् दि चण् संप्र
वृद्धिः कारितलोपः शु द्विर्वचने इन्यसमानेति ह्रस्वः अभ्यास
स्य दीर्घो लघोः पक्षे अशिश्वयत् इनि कृतं स्थानिवदिति ।
श्वि द्विर्वचने इन्यसमानेति ह्रस्वः **ह्वयतेर्नित्यम्** ह्वेञ् स्पर्धा
यामित्यस्य नित्यं संप्रसारणं भवति कारिते सन्परे चण्परे
च परतः जुहावयिषति ह्वयन्तं प्रयोक्तुमिच्छति इन् स
न् इट् अनेन आदौ संप्रसारणे वृद्धिः इनि कृतं स्थानिवदिति
हु द्विर्वचने होजः नाम्यन्तयोरिति गुणः अजूहवत् ह्वयन्तं
प्रायुङ्क्त इन् दि चण् संप्र वृद्धिः कारितलोपः प्राग्वत् हु
द्विर्वचने इन्यसमानेति ह्रस्वः दीर्घो लघोः **अभ्यस्तस्य च**
ह्वयतेरभ्यस्तस्य नित्यं संप्रसारणं भवति जुहाव अट् द्वि
र्वचने अनेन द्वयोरपि धात्वभ्यासयोः संप्र होजः धातोरस्योप
धेति वृद्धिः जुहूषति ह्वातुमिच्छति सन् द्विर्वचने अनेन द्वयो
रपि संप्र स्वरान्तानां सनीति दीर्घः जोहूयते अत्यर्थं ह्वय
ति यण् आङ् द्विर्वचने अनेन द्वयोः संप्र गुणश्चेक्रीयिते नाम्य
न्तानां यणायीति दीर्घः **द्युतिस्वाप्योरभ्यासस्य** द्युत
दीप्तौ ञिष्वप् शयने अनयोरिन्ततयोर्योऽभ्यासः तस्य संप्र
सारणं भवति दिद्युते परोक्षाप् द्विर्वचने अनेन संप्र दिद्यो

ति घते द्योतितुमिच्छति सन् द्विर्वं संप्रइट् घंसुउपा
धायुणः देद्युततें अत्यर्थंद्योत्यते यथाहुः द्विर्वं संप्रगुणः
श्चेक्रीयिते अदिद्युतत् द्योतमानंप्रायुंक्त इन् उपधायुणः
दिवचने कारितलोपः युत् द्विर्वं संप्र इस्यसमानेतिह्रस्वः
स्वापेःखल्वपि सुष्वापयिषति स्वपन्तंप्रयोक्तुमिच्छति इन्
सन् इट् असिद्धवद्त्रेतिदीर्घः स्वप् द्विर्वं अनेनाभ्यासस्यसं
प्र घत्वं. अभ्यासस्येतिकिम् द्योतते स्वापयति **नसंप्रसा**
**रणेसंप्रसारणम्** संप्रसारणेकृतेपुनः संप्रसारणंन
भवति विध्यते विध्यते अयताडने अवसंभवे ते यण् प्र
ह्येतिसंप्रसारणेकृतेपुननंभवति **वशोश्चेक्रीयि**
**ते** वशकान्तावित्यस्यचेक्रीयितेपरेसंप्रसारणंनभव
ति वावश्यते अत्यर्थंवष्टि यथाहुःद्विर्वंदीर्घोनागमेति
दीर्घः चेक्रीयिते इतिकिम् उशन्ति अन्ति अन्वि लुक् प्र
हज्येतिसंप्र **प्रच्छादीनांपरोक्षायाम्** प्रच्छिभ्रस्जि
भ्र स्जां परोक्षायांपरस्मांसंप्रसारणंनभवति ग्रहि
ज्यावयीतिप्राप्तम् पप्रच्छतुः पप्रच्छुः वभ्रश्चतुः वभ्र
श्चुः वभ्रज्जतुः वभ्रज्जुः धुटांतृतीयइतिसस्यदः तस्य
तवर्गश्चटेतिजः **सन्यसवरान्तानामाकारोविक**
**रणे** सन्यसवरान्तानांधातूनामन्तस्य आकारोभव
ति अविकरणे विकरणेतुनभवति दाता देङ् रक्षणे
देड् धोदने दोअवखण्डने अनेनआत्वम् अविकर
णेइतिकिम् दयते दायति ते ति अन्वि प अप् पेत्रायु
**नव्ययतेःपरोक्षायाम्** व्येञ् संवरणेइत्यस्यपरो

क्षायांपरस्मै सव्यञ्जनस्य आत्वंनभवति विव्याय विव्यथि
थ अट् अत् व्येद्वि परोक्षायामभ्यासस्येतिसम्प्र अदेद्वि
द्विः पेचतुः पेचुः परोक्षायामितिकिम् माता **मीनाति**
**मिनोतिदीङांगुणवृद्धिस्थाने** मीञ्हिंसायां डुमिञ्
प्रक्षेपणे दीङ् क्षये एषामन्त्यस्य आत्वंभवति गुणवृद्धि
स्थानेप्रत्ययेपरे माता मास्यति दाता दास्यते श्वस्तनीता
भविष्यन्ती स्यति स्यते अनेन आत्वं अनुगुणःआसः वृ
द्धिस्थाने मापयति दापयति मीनन्तंप्रयुङ्क्ते एवंमिन्वन्तं
दीयमानंप्रयुङ्क्ते इन् अनेनआत्वम् अर्तिह्रीव्लीतिपागमः
अनेनवृद्धिः आप आगुणवृद्धिस्थानेइतिकिम् मीनातिमि
नोति दीयते नाक्र्यादेः श्वादेः दिवादेर्यन् अनिच्च
विकरणाइतिनियमाद्गुणाभावः **सनिचदीङः** दीङ्क्ष
ये इत्यस्यसनिपरेआत्वंभवति अगुणत्वात्पूर्वेणानास्तिसि
द्धिः उपदिदासते उपदातुमिच्छति सन् अनेन आत्वं द्वि
र्वे सन्यवर्णस्येति इत्वम् सनीतिकिम् उपदेदीयते अ
त्यर्थंदीयते यङ्ग्राह्यः **स्मिजिक्रीङामिनि** स्मिङ् ईष
द्धसने जिजये डुक्रीञ् द्रव्यविनिमये इङ् अध्ययने ए
षामन्त्यस्य आत्वंभवति इनिपरे विस्मापयते विजापय
ते विक्रापयते अध्यापयते विस्मयमानंप्रयुङ्क्ते एवंवि
जयमानं विक्रीणानं अधीयानं इन् अनेन आत्वम्
अर्तिह्रीतिपागमः इनीतिकिम् विक्रेता विजेता वि
स्मयिता **सृजिदृशोरागमोकारःस्वरात्परोधु**
**टिगुणवृद्धिस्थाने** सृजविसर्गे दृशिर्प्रेक्षणे अन

योः स्वरात्परः अकारागमो भवति गुणवृद्धिस्थाने धुटा
दौ प्रत्यये परे स्रष्टा स्रक्ष्यति अस्रक्ष्यत् द्रष्टा द्रक्ष्यति अ
द्रक्ष्यत् नाक्ष्यति सृज् अनेन आकारागमः रत्वं भ्रस्जा
दीनां षइति जस्य षः छशोश्चेति शस्य षः षढोः कस्से इति
षस्य कः वृद्धिस्थाने अस्राक्षीत् अद्राक्षीत् अयादि सिचू
अकारागमः रत्वम् अस्य च दीर्घः सिचश्चेतीट् गुणवृद्धि
स्थाने इति किम् सृष्टः सृष्टवान् दृष्टः दृष्टवान् निष्ठे
ति क्तः क्तवतू षत्वष्टुत्वादयणत्वम् तवर्गस्य ष्टुटेति
तस्य ठः **दीङो यो ऽन्तः स्वरादावगुणे** दीङ् क्षये इत्य
स्य स्वरादावगुणे परे यकारागमो भवति उपदिदीये उ
पदिदीयाते उपदिदीयिरे परोक्षा ए आते इरे द्वित्वं ह्र
स्वः अनेन यकारागमः अगुणे इति किम् दानम् गुङेति
गुट् गुणकामना कान्ता इत्यनादेशः मीनाति मिनोति दी
नामित्यत्वम् **आलोपो ऽसार्वधातुके** धातोराका
रस्य लोपो भवति स्वरादावगुणे ऽसार्वधातुके परे पप
तुः पपुः पा रक्षणे अतुस् उस् द्वित्वं अनेनालोपः असा
र्वधातुके इति किम् यान्ति अन्ति अन्वि लक् **इटि च** आ
कारस्य लोपो भवति इटि परे पपिथ ययिथ पा रक्षणे
या प्रापणे थल् लकारः थलि च सेटीत्यर्थः इट् अनेना
कारलोपः **दामागायतिपिबतिस्थास्यतिजहा**
**तीनामीकारो व्यञ्जनादौ** दा इति दासंज्ञकाग्रह
णे मा इति मा माने माङ् माने मेङ् प्रणिदाने गायती
ति कै गै शब्दे गाङ् गतावितिवा पा पाने स्था गतिनिवृत्तौ

हा अन्तकः इति ङेहाकृत्यागे एषां व्यञ्जनादौ असार्वधातु
के अगुणे परे अन्तस्य ईकारो भवति दीयते धीयते मीयते
गीयते अध्यगीष्ट पीयते स्थीयते अवसीयते हीयते इङ्
अध्ययने अधिपूर्वः अद्यतनी न विभाषा लुङ्लृङोरिति गत्वा
त्वात् गाङादेशः तस्यानेन ईत्वम् अन्यत्र नेयते अनेना
कारस्य ईत्वम् देदीयते देधीयते मेमीयते जेगीयते पे
पीयते तेष्ठीयते अवसेषीयते जेहीयते अत्यर्थं ददाति
दधाति माति मीमीते मयते गायति गाते पिबति ति
ष्ठति अवस्यति जहाति यङ्लुः अनेन ईत्वम् द्वित्वं अद्ल
धेधीयिते स्थोऽभ्यासस्य शिखरेशेषः निमित्तात्यये
तिसस्य षः नवर्गस्य ष्टुत्वे इति थस्य ठः अगुणे इति किम् दा
नम् असार्वधातुके इति किम् गाते **आशिषि एकारः**
दादीनाम् अन्तस्य एकारो भवति आशिषि अगुणे यादौ पर
तः देयात् धेयात् मेयात् गेयात् पेयात् स्थेयात् अव
सेयात् हेयात् आशीर्यात् अनेनाकारस्य एकारः अगुणे
यादाविति किम् दासीष्ट **अनउसिज्अभ्यस्तविदाभ्यो**
**ऽभुवः** सिचः अभ्यस्तात् विदः आकारान्तात् धातोः पर
स्य अनः अन्त्ययस्य उस् आदेशो भवति अभुवः भुवः पर
स्मात् सिचः परमन्त्यं वर्जयित्वा सिचः अकार्षुः अला
विषुः अभैत्सुः हन् लस् भिद् अन् सिच् लूनइट् कृञ
अतोऽहलन्तइतिइडभावः भिदसद्भिदीति इडभावः सि
चिपरस्मा इति वृद्धिः अनेन अन उस् अद्वोषेध शिटाभि
निदस्याः अभ्यस्तात् अबिभयुः अजागरुः त्रिभीभये

जागर्तिनिद्राक्षये अन् लुङ् भियोऽत्रुह्रोत्यादेश्चेति लङ् द्विर्व
जाग्रोऽदादेर्लङ् अन् उस् अभ्यस्तानाद्वसीति गुणः विदः
अविदुः विद् अन् अन्ति लङ् अन् उस् आकारान्तात् अदुः
अरुः याप्राप्णौ यादाने इत्यस्तनी अन् अन्ति लङ् अन् उस्
आकारस्योसीत्यालोपः सर्वत्राद्यात्वादिः अभूवइतिकिम्
अभूवन् भूसत्तायां अद्यतनी अन् सिच् इणस्थादापिबतीति
सिज्लोपः भुवोवोन्तइतिवकारागमः इचस्तलोपः इचः
परस्य तप्रत्ययस्य लोपो भवति अकारि अपाठि कृञ् पठ्
अद्यतन्यात्मनेपदं त भावकर्मणोश्चेतीच् अस्योपधेतिदी
र्घः अनेनतलोपः चकारइदर्थः अह्यात्वादिः **हेरकारा**
**द्धन्तेः** अकारात्परस्य हेर्लोपो भवति अहन्तेः दनादिसा
गमोविकल्पात्परस्य हेर्लोपो न भवतीत्यर्थः पच पठ पञ्चमी
हि अन्ति अनेनहिलोपः अहन्तेरितिकिम् जहि हन् हि अ
न्ति लङ् हन्तेर्जहाविति हन्तेर्जः **नोश्चविकरणादसं**
**योगात्** असंयोगात् अनेनवर्णात्संयुक्तात् नोर्विक
कर णात्परस्य हेर्लोपो भवति चिनु सुनु चिञ् सुञ्
षुञ् अभिषवे हि उःस्वादेः अनेनहिलोपः असंयोगादिति
किम् राध्नुहि तक्ष्णुहि राधसाधसंसिद्धौ तक्षूत्वक्षूतनूक
रणे हि विकरणः नोर्विकरणादितिकिम् तुदि एतस्मा
त्नोनः हि अन्ति लङ् **उकाराच्च** उकाराच्च विकरणा
त्परस्य हेर्लोपो भवति कुरु तनु डुकृञ् तनुविस्तारे हि
तनादेरुः करोतेरिति कृञो गुणः अस्योकारः विकर
णादितिकिम् शृणुहि शृणु शृणो हि अन्ति लङ् **उकार**
**लोपोवमोर्वा** उकारलोपो वा भवति वकारमकार

योःपरयोः सन्वः सनुवः सन्मः सनुमः तन्वः तनुवः तन्मः
तनुमः अनेनवाउकारलोपः असंयुक्तस्येतिकिम् राध्नुवः
राध्नुमः **करोतेर्नित्यम्** कृञःपरस्य विकरणस्यलोपोभ
वति कुर्वः कुर्मः वस् मस् अनेनउपकारलोपः **सप्तम्या**
**येच** करोतेःसप्तम्यांयकारेपरे उकारलोपोभवति कुर्यात्
कुर्याताम् कुर्युः सप्तमीयात् याताम् युस् अनेनउपकार
लोपः येइतिकिम् कुर्वीत सप्तमीईत **अस्योकारःसार्व**
**धातुकेगुणे** करोतेरकारस्य उकारादेशोभवति अगुणे
सार्वधातुकेपरे कुरुतः कुर्यात् कुरुताम् अकुरुत कृञ्व
र्तमानातम् सप्तमीयात् पञ्चमीताम् ह्यस्तनीत उनादेशः
करोतेरितिगुणः द्वित्वबहुत्वयोश्च परस्मैइतिगुणाभावः
अनेनअकारस्यउकारः अगुणेइतिकिम् करोति **रुधादेर्वि**
**करणान्तलोपः** रुधादेर्गणस्ययोविकरणः स्वरात्परो
नशान्तस्य अन्तलोपोभवति अगुणेसार्वधातुकेपरे रु
न्धः रुन्धन्ति रुन्ध्यात् भिन्तः भिन्दन्ति भिन्द्यात् रुधिर् आ
वरणे भिदिर् विदारणे तस् अन्ति यात् स्वरान्धादेःपरो
नाशान्तः तस्यानेन नलोपः झढधभेभ्यइति हंडेइत्यत्रतस्य थः धुटांतृतीयश्च
तुर्थेइतिथस्यदः अगुणेइतिकिम् रुणद्धि भिनत्ति [illegible] **अ**
**स्तेरादेः** असभुवीत्यस्यागुणेसार्वधातुकेपरे आदेर्लोपोभव
ति स्तः सन्ति तस् अन्ति अस्तिवत्क अनेनादिलोपः अगु
णेइतिकिम् अस्ति **अभ्यस्तानामाकारस्य** अभ्यस्ता
नामगुणेसार्वधातुकेपरे अकारस्यलोपोभवति जहति
मिमते ओहाक्त्यागे माङ्माने अन्ति अन्ते अति जहात्या

देश्चेति लुक् जुहोत्यादीनामिति द्वित्वं भृञ्दाङ्माङ्हामिदितीत्व
म् अनेन आलोपः लोपोऽस्य स्यादन्तीति नलोपः एवं ददाति द
यात् दध्यात् अगुणे इति किम् जहाति ददाति **क्र्यादीनां**
**विकरणस्य** डुक्रीञ् द्रव्यविनिमये क्र्यादीनां विकरणस्य आ
कारलोपो भवति अगुणे सार्वधातुके परे क्रीणन्ति क्रीणते
लुनन्ति लुनते अन्ति अन्ते नाक्र्यादेः अनेन आलोपः आत्मने
चानकारादिति नलोपः लूञः प्वादीनां ह्रस्वः अगुणे इति कि
म् क्रीणाति लुनाति **उभयेषामीकारो व्यञ्जनादा**
**वदः** उभयेषामभ्यस्तानां क्र्यादिविकरणस्य च आकारस्य
ईकारो भवति व्यञ्जनादावगुणे सार्वधातुके परे अदः दा
सञ्ज्ञकान्वर्जयित्वा जिहीते जिहीताम् अजिहीत मिमीते
मिमीताम् अमिमीत ओहाङ् गतौ माङ् माने वर्त्तते प
ञ्चमीताम् हसन्ती त अन्ति लुक् द्वित्वं भृञ्दाङ्माङ्हामि
दिति अभ्यासस्य इत्वम् अनेन आकारस्य ईत्वम् क्रीणीतः क्री
णीते क्रीणीहि मञ्जीवितमेव पणम् लुनीतः लुनीते लु
नीहि नन्दनम् तस् ते हि नाक्र्यादेः अनेन आकारस्य ईत्वम्
लूञो ह्रस्वः अद इति किम् दत्तः धत्तः दात् धात् तस् थ
स् अन्ति लुक् जुहोत्यादीनामिति द्वित्वं ह्रस्वः धाञः ह्रिनी
धचतथ्योरिति धस्य दः तस्य तथोश्च दधातेरिति धः अभ्य
स्तानामाकारस्येत्यालोपः अघोषे प्रथमः शिटामिति तः अगुणे
इति किम् जहाति क्रीणाति **इकारो दरिद्रातेः** दरिद्रा
इत्यस्य व्यञ्जनादावगुणे सार्वधातुके परे आका
रस्य इकारो भवति ईकारापवादः दरिद्रितः दरिद्रिमः ता

सु मस् अन्विलुक् अनेनइत्वम् अपितोइतिकिम् दरिद्राति
**लोपः सप्तम्यांजहातेः** डोहाक्त्यागेइत्यस्य सप्तम्यांपर
तः आकारस्यलोपोभवति जह्यात् सप्तम्यामितिकिम् जहा
ति **अटिहन्तेःसार्वधातुके** हन्तेरल्लोपोभवति अडा
दावपितोसार्वधातुकेपरे हतः हथः तस् थस् अन्विलुक्
अनेनाल्लोपः अटीतिकिम् हन्वः हन्मः अपितोइतिकिम्
हन्ति हंसि **शासेरिदुपधायाअण्व्यञ्जनयोः** शासुअनु
शिष्टावित्यस्य अणिव्यञ्जनादौचापितोप्रत्ययेपरे उपधायाइत्वंभ
वति अन्वशिषत् अन्वशिषताम् अन्वशिषन् अद्यतनी दि ता
म् अन् पुषादित्वादण् अनेनाकारस्यइत्वम् शासिवसिघसी
तिषः शिष्यते शिष्टः शिष्मः ते यण् वस् मस् अन्विलुक् अ
नेनइत्वम् शासवस्यषः अण्व्यञ्जनयोरितिकिम् शासति
अन्ति अन्विलुक् लोपोभ्यस्तादितिनलोपः अपितोइतिकिम्
शास्ति **हन्तेर्जहौ** हनहिंसागत्योरित्यस्यहौपरेजआदेशोभ
वति जहिनीलदुकूलवाससम् अन्विलुक् अनेनजआदेशः
हाविति किम् हंसि **दाधोरेभ्यासलोपश्च** दासंज्ञकानां
अ स्येश्च हौपरे एत्वंभवति अभ्यासलोपश्च देहि धेहि दा धा
हि अन्विलुक् द्वित्वं अनेन आकारस्य एत्वम् अभ्यासलोपश्च
अस्तेः एधि अस् हि अन्विलुक् असोरादेरिति अकारलोपः
अनेनएत्वम् असोरितिहेर्धिः हाविति किम् ददाति अस्ति
**अस्यैकव्यञ्जनमध्येनादेशादेःपरोक्षायाम्** अनादे
शादेर्धातोरेकव्यञ्जनमध्येकेवलयोर्व्यञ्जनयोर्मध्ये यःअ
कारस्तस्य एत्वंभवति अभ्यासलोपश्च अगुणायांपरोक्षायां

ग्रसाम् पेचतुः पेचुः शेकतुः शेकुः पचू पाके अतुस् उस् प
रोक्षायांचेति अगुणत्वम् द्वित्वे अनेनएत्वाभ्यासलोपौ **थलि च**
**सेटि** अनादेशादेर्धातोः केवलेऽसंयुक्तव्यञ्जनयोर्मध्ये यः अकारस्त
स्य थलि सेटि परे एत्वं भवति अभ्यासलोपश्च पेचिथ शेकिथ
क्रस्भृवृस्तुद्रुस्रुश्रुव एव परोक्षायामिति नियमादिट् तॄ
**फलभजत्रपश्रन्थिग्रन्थिदम्भीनां च** तॄ प्लवनतरणयोः
फल निष्पत्तौ भज सेवायाम् त्रपूष् लज्जायाम् श्रन्थ ग्रन्थ सं
न्दर्भे दम्भु दम्भे एषामकारस्य एत्वं भवति अभ्यासलोपश्च प
रोक्षायामगुणायां थलि सेटि च परे तेरतुः तेरुः तेरिथ ऋद
न्तानांचेति गुणः फेलतुः फेलुः फेलिथ भेजतुः भेजुः भेजिथ
त्रे पे त्रेपाते त्रेपिरे श्रेथतुः श्रेथुः श्रेथिथ ग्रेथतुः ग्रेथुः ग्रेथिथ
देभतुः देभुः देभिथ श्रन्थि ग्रन्थि दम्भीनां परोक्षायामनि
श्रन्थि ग्रन्थीति अनुषङ्गलोपः थलि चेति थलि परे अनुषङ्गलो
पः **न शसददवादिगुणानाम्** शसु हिंसायां दद दाने
अनयोः वकारादीनां धातूनां गुणिनां कृतगुणानांच परो
क्षायामगुणायां थलि सेटि च परे एत्वाभ्यासलोपौ न भवतः
विशशसतुः विशशसुः विशशसिथ ददे ददाते ददि
रे ववमतुः ववमुः ववमिथ ववलतुः ववलुः ववलिथ टुव
मु उद्गिरणे वल वल्ल धारणे गुणिनां यथा निपपरतुः निप
परुः निपपरिथ विददरतुः विददरुः विददरिथ पॄ पालनपू
रणयोः दॄ विदारणे ऋदन्तानांचेति गुणः **स्वरादाविवर्णो**
**वर्णान्तस्य धातोरियुवौ** इवर्णान्तस्य उवर्णान्तस्य च धा
तोरि वर्णोवर्णयोर्यथासङ्ख्यं इय् उव् अनेनावादेशो भव

नः अगुणोस्वरादौप्रत्ययेपरे शिश्रियतुः शिश्रियुः चिक्षियतुः चि-
क्षियुः चिक्रियतुः जुहुवतुः जुहुवुः लुलुवतुः लुलुवुः श्रिञ् से
वायाम् क्षिनिवासगत्योः डुक्रीञ् द्रव्यविनिमये हुदानादनयोः
लूञ् छेदने परोक्षायां अतुस् उस् द्विर्वे अनेनइय् उवुक्षि
यन्ति शियन्ति लुवन्ति श्रुवन्ति क्षिनिवासगत्योः वीगति व्या
प्ति प्रजनकान्त्यसनखादनेषु टुओश्वि गतौ धात्वादेः षः सः
स्रोतीनत्तयोः सनिइतिज्ञापकात् टस्पतः अन्ति अन्विति
यस्तुदादेरनीत्यप्रमाणम् अन्येषांलक्ष्यं अनेनइयुवौ स्वरा
दावितिकिम् श्रीयात् लूयात् आशीर्यात् नाम्यन्तानांय
णायीतिदीर्घः अगुणइतिकिम् आयिता लविता श्रस्तनी
ता इत्युत्तमः इवर्णोव र्णान्तस्येतिकिम् चक्रतुः धातो
रितिकिं कुर्वन्ति अत्र धातोर्नउकारः किन्तुविकरणस्य अ
भ्यासस्यासवर्णे अभ्यासस्यैा इवर्णोवर्णौनयोर्यथा
संख्यं इय् उव् इत्येतावादेशौभवतः असवर्णेस्वरेपरे इ
येष उवोष इषइच्छायां उषदाहे परोक्षाअट् उपधायाःगुणः
द्विर्वह्रस्वः अनेनइय् उवौ इय् ति ऋसृगतौ अर्त्ति आर्त्ति ज
ह्रोत्यादेश्चेतिलुक् जुहोत्यादीनामिति द्विर्वे अकारःऋव
र्णस्येति अकारः तस्यअर्त्ति पिपर्त्योश्चेति इत्वम् तस्यानेन
इय् रत्वम् लोपोभ्यस्तादन्तिनइतिनलोपः असवर्णइति
किम् ईजतुः ईजुः ऊपतुः ऊपुः यजदेवताः डुवपबीजस
न्ताने अतुस् उस् स्वपिवचीतिसंप्र इट् उप् द्विर्वे दीर्घपर
लोपो स्वरेइतिकिम् इयाज उवाप अट् द्विर्वपरोक्षायामभ्या
भ्यासस्येतिसंप्र **नोर्विकरणस्य** विकरणस्यनोर्यउवर्णो

तस्य उव् आदेशो भवति अगुणे स्वरादौ प्रत्यये परे आप्नुवन्ति
प्नुवन्ति आप्लृव्यामी प्लृवाञ्चौ लृकारः उ वादीत्यर्थः अ
न्ति नुः स्वादेः तस्यानेन उव् असंयुक्तस्य श्नुविकरणस्य नोर्व
कारइति वकारो वक्ष्यते इदं संयुक्त उदाहरणं नोरिति किम्
कुर्वन्ति कृञ् अस्ति तनादेः करोतेरिति गुणः अस्योकारः
सार्वधातुकेऽगुणेइति उत्वम् वस्तुवर्णः विकरणस्येति किम्
लुवन्ति स्वरादावितिकिम् प्राप्नुयात् सप्तमीयात् अगुणेइ
तिकिम् प्राप्नवानि नुःस्वादेःगुणः धातोरिवर्णस्यासंयोगपू
र्वस्यानेकाक्षरस्य अनेकाक्षरस्यानेकस्वरस्य धातोर्य इवर्णः
असंयोगपूर्वः यस्मात्संयोगःपूर्वो नास्ति तस्य यकारादेशो
भवति अगुणेस्वरादौ प्रत्यये परे इयुवोर्बाधः चिच्युतः चि
च्युः निन्यतुः निन्युः चिञ् चये णीञ् प्रापणे णोनः अतुस्
उस् द्विर्यातुस्वः कृतद्विर्वचनस्यानेकाक्षरत्वादिवर्णस्य
यत्वम् इवर्णस्य किम् लुलुवतुः लुलुवुः असंयोगपूर्वस्य
किम् शिश्रियतुः शिश्रियुः टुओश्वि गतिवृद्ध्योः टुश्वाद्यः टु
नुबन्धावनुरित्यर्थः ओकारःस्वायोदनुबन्धादित्यर्थः अ
तुस् उस् शिश्वि च अभ्यासस्यादिव्यञ्जनमित्यनादिव्यञ्ज
नलोपः स्वरादावितिवर्णो वर्णान्तेतिइयु अनेकाक्षरस्येति किम्
धियति धियावतो ति अन्वि तुदादेरणीत्यगुणत्वम् अगुण
इतिकिम् निनयिथ परोक्षाथल् लकारःथलि च सेटीत्यर्थःइ
इ इणश्च इणगमौ इत्यस्य स्वरादावगुणेपरे यत्वं भवति इ
युगान्तः यन्ति यन्तु अन्वि अदादेर्लुकणकारः इणोगात्य
र्थः अगुणेइतिकिम् अयानि इणः पञ्चमीआनिगुणः स्वरा

याः कारिते परे ह्रस्वो वा भवति चित्तविरागे गम्यमाने चित्त
ह्रूपयति दीपयति वा विरक्तं संपादयतीत्यर्थः "मानबन्धानां
ह्रस्वः" घटचेष्टायामित्यत आरभ्य घम हम ह्वेल्ल ह्वे इति यावत्
ये धातवः अमान्तबन्धा अविमाबन्धाः कार्यार्थं पूर्वाचार्यैः प्र
तिज्ञाताः तेषामुपधायाः कारिते परे ह्रस्वो भवति घटयति प्र
थयति व्यथयति घटचेष्टायां प्रथ प्रख्याने व्यथ भय चलनयोः
घटमानं प्रयुङ्क्ते प्रथमानं व्यथमानं धातोश्च हेतावितीन् अ
स्योपधेति दीर्घः नस्यानेन ह्रस्वः एवं रञ्जयति मृगान् रञ्ज
रागे रञ्जन्तं प्रयुङ्क्ते इति इन् रञ्जेर्णौ मृगरमणे इति नस्यालो
पाद्व्यञ्जनलोपः दीर्घे कृते जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मा
नबन्धत्वादनेन ह्रस्वः गमयति शमयति गम्लृ गतौ शमु उ
पशमे शाम्यन्तं प्रयुङ्क्ते इति इन् अस्योपधेति दीर्घः अनेन ह्र
स्वः इचि वा मानबन्धानां इच्परे इनि उपधाया ह्रस्वो वा भ
वति अघटि अघाटि अव्यथि अव्याथि अप्रथि अप्राथि घ
टचे व्यथ भय प्रथ प्र घटमानः प्रायोजि व्यथमानः प्रथ
मानः धातोश्च हेतावितीन् अद्यतनी त अद्यात्वादि भाव
कर्मणोश्चेति इच् अस्योपधेति दीर्घः नस्यानेन वा ह्रस्वः का
रितस्यानामिद्विकरणे इति कारितलोपः इचस्तलोपः का
रित इति किम् समघाटि चैत्रेण उपधा दीर्घः जनिवध्योश्च
जन जनने जनी प्रादुर्भावे इति वा हन हिंसागत्योरित्यनयो
रुपधाया ह्रस्वो भवति इचि परे अजनि अघात दीपजनबुध
पूरि ताथि प्यायिभ्यो न्यतरस्यामिति कर्तरि भावे वा इच् अ
वधि हन हिंसागत्योः अद्यतन इच् अद्यतन्यां चेति हन्तेः वधा

देश्वाः अस्योपधेतिदीर्घः अनेनह्रस्वः ओदौद्भ्यामायिन्नायीस्व
रवत् ओकारौकाराभ्यां परौ यिन् आयिइत्येतौ स्वरवद्भवतः
स्वरे परे अव् आवौ उक्तौ तौ यिन्नाय्योरपि भवत इत्यर्थः यथा
गोत्वमत्रनेष्यते गव्यति गव्यते नाव्यति नाव्यते गामिच्छ
त्यात्मनइति नाम्नआत्मेच्छायां यिन् गौरिवाचरति कर्तुरायिः
सलोपश्चेति आयिः एवं नावमिच्छत्यात्मनः नौरिवाचरते ना
मिव्यञ्जनान्तादायेरादेरित्याकारलोपः आद्यन्ताच्चेत्यात्मने
पदं ते अपि नाम्यन्तानां यणायियिन्नाशीश्चेक्रीयितेषु
येदीर्घः नाम्यन्तानां धातूनां लिङ्गानां च यणि आयौ आशि
षि यकारे चेक्रीयिते परे अन्त्यस्य दीर्घो भवति यणि चीयते
स्तूयते आयौ अग्नीयते पटूयते चिञ्चये ष्टुञ् स्तुतौ वर्त
मानाते सार्वधातुके यण् अनेन दीर्घः अग्निरिव आचरति
पटुरिवाचरति कर्तुरायिः सलोपश्चेत्यायिः नामिव्यञ्जना
न्तादायेरादेरित्यालोपः अनेन दीर्घः अग्नीयति पटूयति यि
नि अग्निमिच्छत्यात्मनः एवं पटुं नाम्नआत्मेच्छायां यिन् इकार
नकारौ यिन्सवर्णास्येत्यर्थौ अनेन दीर्घः ते अपि आशिषि ची
यात् स्तूयात् आशीर्यान् दीर्घः चेक्रीयिते चेचीयते तोष्टू
यते अत्यर्थं चिनोति स्तौति यथाहुः धातोरेकस्वरादिति यश
ब्दः अनेन दीर्घः द्विर्वचनञ्चेक्रीयिते नाम्यन्तानामिति किम्
चिकीर्षात् कृञ् कर्तुमिच्छात् धातोर्वा कर्मणः इति सन् स्व
रान्तानां सनीति दीर्घः ऋदन्तस्येरगुण इतीर् नामिनोर्वोर
कुर्छुरो व्यञ्जने इति दीर्घः कीर् द्विर्वे अभ्यासकार्यम्
चिकीर्ष इति स्थिते आशीर्यात् अस्य च लोपः ये इति किम्

वे षीष्ट **इणोऽनुपसृष्टस्य** इणागतावित्यस्य अनुपसृष्टस्य उ
पसर्गरहितस्य दीर्घो भवति यणि आशीर्यकारे च परे ईयते ईया
त् अनुपसृष्टस्येति किम् निरियते समियात् अयात्तौ निर्
गम् पूर्वो यणाशिषोरिति किम् इयात् समीयात् यइ
ति किम् एषीष्ट ग्रामं चैत्रेण आशीरात्मनेपदं सीष्ट **ऋत**
**ईद् यङि चेक्रीयितयमाथिषु** ऋतः ऋकारान्ताद्धातोर्लिङ्गा
ईकारागमो भवति चेक्रीयिते थिनि आयौ च परे चेक्रीयिते
चेक्रीयते अत्यर्थं करोतीति द्रवति यथाह अनेन ईकारागमः रव
म् द्विर्वे अभ्यासकार्यम् थिनि कर्त्रीयति कर्तारमिच्छत्या
त्मनः नामात्मनेच्छायां थिन् आयौ कर्त्रीयते कर्ता इवाच
रति कर्तृशब्दात् सलोपश्चेत्याथिः नामिव्यञ्जनान्तादित्यायेर
लोपः **इरन्यगुणे** ऋकारान्ताद्धातोः अगुणे अनिचाविकरणे परे इ
कारागमो भवति आद्रियते आध्रियते स्त्रियते प्रियते दृङ् आदरे
धृङ् अवस्थाने मृङ् प्राणत्यागे दृङ् व्यायामे इति आन्वितदादेर्गनि
शयत्यात्वम् अनेन इकारागमः स्वरादाविवर्णोवर्णान्तस्य
धातोरियुवौ अनीति किम् ददृशे परोक्षा ए द्विर्वे अकारऋ
वर्णस्येति अकारः अगुण इति किम् दरति **यक्याशिषो**
**र्ये** ऋकारान्तस्य धातो रिकारागमो भवति यणि आशीर्य
कारे च परे क्रियते क्रियात् ह्रियते ह्रियात् यक्याशिषोरि
ति किम् कार्यम् ऋवर्णव्यञ्जनान्ताद् ध्यण् णकार इज्वद्भावा
र्थः इज्वद्भावाद् वृद्धिः यइति किं कृषीष्ट **गुणोऽर्तिसंयोगा**
**द्योः** ऋगतिप्रापणयोः ऋ स्मृगताविति वा अनयोः सं
योगादेश्च ऋकारस्य गुणो भवति यणि आशीर्यकारे च परे

अर्य्यते स्मर्यते अर्यात् स्मर्यात् ऋगतौ स्मृचिन्तायां यङितिकि
म् समृषीष्ट संस्मृषीष्ट समोगमृच्छि प्रच्छि स्वृभ्य ऋविदि
दृशभ्य इत्यात्मनेपदम् **चेक्रीयिते च** अन्तेः संयोगादेश्च
ऋकारस्य गुणो भवति चेक्रीयिते परे अरार्य्यते ऋगति प्रा
पणयोः ऋच्छगताविति वा ऋटिलस्वच्छति इयर्ति वा स्मृचि
स्मृत्रि मृत्रि ऋट अटि अभ्रू    ऊर्णुञ् इति यङाहुः अनेन गुणः
स्वरादेर्द्वितीयस्येति यं द्वित्वं अनादिव्यञ्जनलोपः दीर्घोनागम
नस्येत्यभ्यासस्य दीर्घः संयोगादेर्यथा सास्वर्य्यते स्वृ यङि अप्र
र्यं स्वरति यङाहुः गुणः स्व द्वित्वं अभ्यासकार्यं प्राग्वद्दीर्घः ॥
**घ्राध्मोरी** घ्रा गन्धोपादाने ध्मा शब्दाग्निसंयोगयो रित्येतयो
रन्त्यस्य ईत्वं भवति चेक्रीयिते जेघ्रीयते देध्मीयते अत्यर्थं जि
घ्रति धमति यङाहुः अनेन ईत्वम् चेक्रीयिते किम् घ्रायते
ध्मायते **यिन्यवर्णस्य** अवर्णस्य यिनि परे ईत्वं भवति पुत्री
यति मालीयति पुत्रमिच्छत्यात्मनः यिन् इकारनकाराविद
र्थौ अनेन ईत्वम् यिनीति किम् शुभकाम्यति अवर्णस्येति कि
म् रायमिच्छत्यात्मनः रैयति **अदेर्घस्लृ सन्नद्यतन्योः**
अद भक्षणे इत्यस्य घस्लृ आदेशो भवति सन्यद्यतन्यां च पर
तः लृकारः पुषादीत्यर्थः जिघत्सति अघसत् अत्तुमिच्छती
ति वाक्ये कृते धातोर्वा कर्मणः इति सन् अद्यदि पुषादिसूत्रेण
अण् अनेन धातोश्च स्लृ आदेशः सनि द्वित्वं अभ्यासकार्यम्
सन्नद्यतन्योरिति किम् अत्ति अन्विलक् अघोषेघाशी टंअस्य
मऽत्ति दस्यतः **वा परोक्षायाम्** अदेः परोक्षायां परस्याश्च
स्लृ आदेशो वा भवति जघास जक्षतुः जक्षुः आद आदतुः उ

त् घस्लृआदेशः द्वित्वं अटि उपधादीर्घः अन्यत्रगमहनजन
खनघसामुपधायाइति उपधालोपः अदोघेस्राशीदामितिच
स्यकः घासिवसिघसीनांचेतिसस्यषः पक्षे आद आदतुः आ
दुः अस्यादेः सर्वत्रेतिदीर्घः दीर्घोपरलोपः परोक्षायामितिकि
म् अन्ना अन्नता आम्बनः **वेञोवयिः** वेञ्तन्तु सन्तानेइ
त्यस्य परोक्षायांपरस्यां वयिआदेशोवाभवति इकार उच्चार
णार्थः उवाय ऊयतुः ऊयुः पक्षे ऊवतुः ऊवुः वस्यान्यतरस्यां
किति इतिनत्वान्तरात् यमयवः ग्रहिज्येतिसंप्र अटिपरोक्षायां
मभ्यासस्येत्यभ्यासस्यसंप्र ववौ ववतुः ववुः सन्ध्यक्षरान्तानामा
कारः द्वित्वं अटअकारादटऔ अन्यत्रालोपोसार्वधातुके इति द्वि
वचनेकृतेआलोपः नवेञश्वेरत्रणौचेतिसंप्रसारणाभावः प
रोक्षायामितिकिम् वाता **हनेर्वधिराशिषि** हनहिंसाग
त्योरित्यस्यआशीषिपरस्यावधिआदेशोभवति इकार उच्चा
रणार्थः वध्यात् वध्यास्ताम् वध्यासुः आशिषीतिकिम् ज
घान अट् अभ्यासाद्धेर्निहस्यघः **अद्यतन्यांच** हनहिंसा
गत्योरित्यस्य अद्यतन्यांच परस्यावधिआदेशोभवति अव
धीत् अवधिष्टाम् अवधिषुः अद्यतनी दिताम् अन् अनेनव
धिआदेशःसिच् इट् एकत्वेसिचइतिईट् इटईटीतिइतिसिचो
लोपः अन उस् षत्वम् तवर्गस्यषटवर्गाट्टवर्गइतितस्यट
त्वम् सेटोवाइतिदीर्घोत्रनेष्यते **इणोगाः** इणगताववि
त्यस्यगाआदेशोभवति अद्यतन्यांपरतः अगात् अगाता
म् अगुः णाकारइत्कार्थः अद्यदिताम् अत् सिच् इणस्था
पिवतिभूभ्यः सिचःपरस्मैइतिसिज्लोपः अनेनगाआदेशः

अनइस् आकारस्योसि इत्याकारलोपः अद्यतन्यामिति किम् इ
याय अट् द्विर्वहाङि: अभ्यासस्यासवर्णे इत्यभ्यासस्य इय्" इ
ङः परोक्षायाम्" इङ् अध्ययने इत्यस्य गाँ आदेशो भवति प
रोक्षायांपरतः अधिजगे अधिजगाते अधिजगिरे अनेन गा
आदेशः द्वित्वं आलोपोसार्वधातुके इति आलोपः सनीणि
ङोर्गामिः इणगतौ इङ् अध्ययने इत्येतयोः गामि आदेशो
भवति सनि परे इकार उच्चारणार्थः जिगामिषति जिगामिष
तः जिगामिषंति एतुमिच्छति इच्छतः इच्छन्ति सन् अनेन ग
मि आदेशः सेगमः परस्मै इति इट् अधिजिगांसते अधिजि
गांसेते अधिजिगांसन्ते अध्येतुमिच्छतीति सन् अनेन गामि
आदेशः हनिगमिङोस् उपधायाः इत्युपधादीर्घः मनोरनुस्वा
रोध्रुटि इत्यनुस्वारः आतेआथे इति च आते इत्याकारस्य इत्वं अ
कारेऽस्याप्यकारलोपः सनीति किम् एति अधीते अन्विलुक् इ
लोगुणः इङः सर्वत्रात्मने इति गुणाभावः अस्तेर्भूरसार्व
धातुके अस भुवीत्यस्य भू आदेशो भवति असार्वधातुके
परे अभूत् वभूव भविता भवितुम् भवितव्यम् असार्व
धातुके इति किम् अस्ति स्यात् अस्तु आसीत् सनमस्यास्ते
वादेरित्यकारलोपः त्यसनत्यादिप्रत्यये अस्तेर्दिस्योः इतीट्
अस्तेरित्यकारस्य आकारः अस्ति अदादेर्लुक् सर्वत्र ब्रुवोव
चिः ब्रूञ् व्यक्तायां वाचीत्यस्य असार्वधातुकविषये वचि आ
देशो भवति इकार उच्चारणार्थः अवोचत् उवाच वक्ता उक्ता
न् वक्ष्यति अवक्ष्यत् ब्रूञ् व्यक्तायां वाचि अद्यतनी दि अने
न वच् आदेशः अस्यतिवचीत्यङ् अङि वचेरोउ उपधाया इ

स्युपधायाओत्वम् अदिपरोक्षायामभ्यासस्योभयेषामित्यभ्यास
स्यसंप्र अन्यत्रपचिवचीतीडभावः असार्वधातुकेकिम् ब्रवी
ति ब्रूयात् ब्रवीत अब्रवीत् अन्विलक्ष्ण ब्रुव ईड्वचनादिरिति
ईडागमः यान्वन्ययेईड् अगुणत्वात् चक्षिङः ख्याञ् चक्षि
ङ् व्यक्तायांवाचिइत्यस्य ख्याञ् आदेशोभवति असार्वधातुकवि
षये आख्यत् आख्यत आचख्यौ आचख्ये आख्याता २ आख्या
स्यति आख्यास्यते आख्यास्यत् आख्यास्यत अद्यतन्यामण
स्यतिवचिख्यातिलिपिसिचिह्वः इत्यण् आलोपोसार्वधातुके इत्या
लोपः असार्वधातुकेकिम् आचष्टे अन्विलक्ष स्कोः संयोगा
द्योरन्तेचेति कलोपः तवर्गस्यषटेतितस्यटः वा परोक्षा
याम् चक्षिङः परोक्षायांविषये ख्याञ् आदेशोवाभवति
आचख्यौ आचख्ये आचचक्षे अज प अजेर्वी अजगति
क्षेपणयोरित्यस्य असार्वधातुकविषयेवी आदेशोभवति
वेता वेष्यति अवेष्यत् सप्तमी ता भविष्यन्तीस्यति क्रिया
ति पतिःस्यात् अद्यतनादिः अनेनवीआदेशः गुणः षत्वम्
असार्वधातुकेकिम् अजति अदादेर्लुग्विकरणस्य अ
दादिगणपठितेभ्योधातुभ्यः परस्यआन्विकरणस्यलुक् भ
वतीतिद्वित्व बहुत्वयोश्चपरस्मै इतिद्वित्वेगुणाभावः विकरण
स्येतिकिम् अयते जुहोत्यादेश्च जुहोत्यादिगणपठिते
भ्योधातुभ्यःपरस्यान्विकरणस्यलुग्भवति जुहोति ददा
ति बिभर्ति हुदा डुदाञ् डुभृञ् धारणपोषणयोः अन्वि
तस्यानेनलुक् जुहोत्यादीनांसार्वधातुके इतिद्वित्वे होजः
ह्रस्वः भस्त्राष्माजामित् द्वितीयचतुर्थयोरितिभस्यबः वि

कवलास्येतिकिम् ह्वयल्लेयएर नाम्यलानामितिदीर्घः वाचेक्री
यितस्य चेक्रीयितस्यवालुग्भवति बोभवीति बोभोति ग्रन्य
र्थ्भवति इतिवाकोक्ते धातोरेकस्वरादितियघाङः तस्याने
नलुक् विरेफोवलुकीतिज्ञापकात् चएपरोक्षेतिद्विर्वं गुए
श्चेक्रीयितइतिगुएः द्वितीयचतर्थयोरितिसम्बः चर्करी
तंपरस्मैपदमिति वर्तते ग्रन्विलुक् यङोवा इतिततानन्तरा
द्वाईङ् गुएः पते बोभूयते ग्रत्वि इएस्थादापिवति भूभ्यः
सिचःपरस्मै इएगतौस्थागतिनिवृत्तौदाइतिदासंज्ञएट्य
ते पिवतीतिपाधाने भूसत्तायां ग्रस्लेन्भूवौ पम्यःपरस्यसि
चः परस्मैपदेपरेलुग्भवति ग्रगात् ग्रस्थात् ग्रदात् ग्रधात् ग्र
पात् ग्रभूत् ग्रयदिसिच् तस्यानेनलुक् इणोगाःपरस्मैपदे
इतिकिम् व्यधायिषाताम् ग्रमायिषत इएगतौ डुधाञ्दाने
निपूर्वःस्यासिच्सीयुट्तासिष्भावकर्मणोरूपदेशोज्झनग्रहृदृ
शांवाचिरावृद्धेतिइट् तस्यपक्षेइत्त्वज्ञावादाधिरिच्यादन्तानां
मितिञ्काकारस्यायिः इएोगाः ग्रायिः ग्रात्मनेचानकारादिति
नलोपः इतिलुङ्लावा ग्रोतश्चकारणसंप्रसार
णपादःचतर्थः ष डौनाम्यन्तयोर्धातविकरएए
योर्गुणः डौनाम्यन्तयोर्धातविकरणयोरन्यस्यगुणोभ
वति तत्रस्यानेन्तरतम इतिवचनात् इकारस्यस्यानेए
कारउकारस्य ग्रोकारऋकारस्यग्रर्गुणोभवति चेता ने
ता स्तोता लविता कर्ताचिञ् चये णीञ् प्रापणे ष्टुञ् स्तु
तौ लूञ्छेदने डुकृञ्करणे स्वरूनीता इट् ग्रनेनगुणः
विकरणस्य यथा सनोत् तनोत् पञ्चमीत तुःस्वादेः ज्ञ

नादेशः अनेन गुणः ष्णुञ् अभिषवे तनु विस्तारे **नामिनश्चोप**
**धाया लघोः** धातोरुपधाया नामिनो लघोः गुणो भवति
वेदिता सोषिता वर्तिता विद ज्ञाने षुष स्तेये वृतु वर्तने ता
इट् अनेन गुणः देग्धा दोग्धा दिह उपचये दुह प्रपूरणे दा
दे र्घ इति ढस्य घः झढधभेभ्यस्तथोर्धोऽध इति तस्य धः ष्टुटो
तृतीयश्चतुर्थे इति घस्य गः **अनि च विकरणे** धातोरनि
विकरण एव परे गुणो भवति नान्यस्मिन् जयति जिजयेति
अन्वि अनेन गुणः **करोतेः** डुकृञ् करणे इत्यस्य उविकर
णे परे गुणो भवति करोति कुरुतः कुर्वन्ति अस्योकारः सा
र्वधातुके गुणे इत्यकारस्य उत्वम् **भिदेः** भिदिर् विदारणे इ
त्यस्य विकरणे परे गुणो भवति पूर्वेणानियमितानयोर्नप्रा
मः भेद्यति दिवादेर्यन् **अभ्यस्तानामुसि** अभ्यस्तानां
सम्बन्धीयः अन उस्ि जक्षस्तादिदाभ्यां च इति अन उस् त
स्मिन् परे गुणो भवति द्वित्वबहुत्वयोश्च परस्मै इति निषेधः प्रा
मः अबिभयुः अजागरुः ऐयरुः ञिभी भये जागृ निद्राक्षये
ऋ गतिप्रापणयोः ह्यस्तनी अन् अड्धात्वादिः अन्वि जक्षेत्या
देश्चेति लुक् जक्षित्यादीनां सार्वधातुक इति भी ऋ द्वित्वे
ह्रस्वः द्वितीयचतुर्थयोरिति भस्य बः अकार ऋवर्णस्य अर्ति
पिपर्त्योश्चेति इत्वम् अभ्यासस्यासवर्णे इति इय् स्वरादीनां
वृद्धिरादेः ऐकारः अनेन गुणः अड्धात्वादिः अन उस् जागुः
अदादेर्लुक् अभ्यस्तानामिति किम् चिन्युः चिञ् चये परो
क्ताउस् द्वित्वं यत्र वर्णस्यासंयोगपूर्वस्यानेकाक्षरस्येति य
त्वम् **नाम्यकारान्तवन्तवेक्रीयितयोः** णकारान्तवन्ते

प्रत्यये चेक्रीयिते च परे गुणो न भवति नीयते लूयते सार्वधातुके
यत् अगुणवत् अयादिष्वकृदादिसूत्रेण णा चेक्रीयिते यथा ने
नीयते लोलूयते वेभिद्यते नरीनृत्यते अप्यर्थं नयति लुनाति
भिनत्ति नृत्यति यथाह नृतेः क्रमनोरी इति रीआगमः अ
**भ्यस्तस्य चोपधाया नामिनः स्वरे गुणो न सार्वधा
तुके** अभ्यस्तसंज्ञकस्य धातोरुपधाभूतस्य नामिनो गुणो न
भवति स्वरादौ गुणो न सार्वधातुके परे नेनिजानि अनेनिज
म् वेविषाणि अवेविषम् णिजिर् शौचपोषणयोः विष्लृ
व्याप्तौ पञ्चमी आनि ह्यस्तनी अम् अभ्वि ज्वहोत्यादीनामिति द्वि
र्वं निजि विजि विषामित्यभ्यासस्य गुणः अनेनोपधागुणा
भावः आमि अङ्गात्वादिः अभ्यस्तस्येति किं वेदानि अम्बिव
क उपधायाः उपधाया इति किम् बिभराणि जिह्रयाणि
डुभृञ् धारणपोषणयोः ह्री लज्जायाम् आनि अभ्वि ज्वहो
त्यादेः श्लेति श्लुक् ज्वहोत्यादीनां सार्वधातुके इति द्वित्वं अभ्यास
कार्यम् भञ्जः भञ्जाम् आङामिदित्यभ्यासस्येत्वम् स्वरे इति
किं नेनेक्ति णवर्गस्याकिः अन्यत्पूर्ववत् सार्वधातुके इति कि
म् ननेज अट् उपधायाः **सनि चानिटि** सनि अनिटि
अभ्यस्तस्य नामिन उपधाया गुणो न भवति बिभत्सति बुभु
त्सते भेत्तुमिच्छति बोद्धुमिच्छति इति वाक्ये कृते सन् तुर्ये स्ट
तीयादेर्धढभान्तस्य धातोरिति बस्य भः जिघृक्षति ग्रह उपादा
ने गृहीतुमिच्छति सन् ग्रहि स्वपि प्रच्छां सनीति संप्रसारणम्
होढः इति हस्य ढः प्राग्वत् गस्य घः ग्रहघोः सनीति इउभा
व पक्षे कः षेति कत्वम् सनीति किम् वेत्ति अनिटीति कि

मृ ञुकोषिवति कुषनिष्कर्षे कोषितमिज्छतिस्म अद्यतन्या शिषोरात्मने अनिटीत्येवनामिनउपधायाश्गुणोनभवति अद्यतन्याशिषोः स्वत्यिन्त्य निटिश्चात्मनेपदेपरे अभिन्न अ उर् भिदिर् विदारणे अद्यतवगमने त सिच् धुटस्व धुटीति सिचोलोपः अनेनउपधायागुणाभावः झढ्यभेभ्यस्तथोर्धोध इतितस्यधः अभित्साताम् अभित्सत अवुत्साताम् अवुत्सत अद्यतनी आताम् अन्त सिच् आत्मनेचानकारादितिनलोपः बुधेःप्रागवद्धस्यभः आशिषि भित्सीष्ट बुधेःप्रागवद्धस्यभः अ निटीतिकिम् अवर्तिष्ट वर्तिषीष्ट वृतुवर्तने अद्य त सिच् आशीःसीष्ट इट्गुणः अद्यतन्याशिषोरितिकिम् नित्स्यतेभे भोत्स्यते भविष्यन्तीस्यतेएउपधायागुणः बुधेस्तृतीयादेरिति वस्यभः अधोघेभ्योधाधामितिदधयोलः ऋदन्ताच्च ऋदन्तानांधातूनांगुणोनभवति अद्यतन्याशिषोरात्मनेप देनिटिपरे अकृत अहृत कृषीष्ट हृषीष्ट ऋतोऽवृञ्जइ तीड्भावः ह्रस्वाच्चानिटइतिसिज्लोपः अनिटीतिकिम् अ वरिष्ट वरिषीष्ट वृङ्संभक्तौ वृञ्वरणेइतिवा स्वरःतत्रणे स्याद्दकारइतिऋकारोपिगृह्यते अस्तीर्ष्ट स्तीर्षीष्ट स्तृञ् आ च्छादने अद्यतनी त सिच् आशीःसीष्ट ऋदन्तस्येरगुणेइ इतिइर् नामिनोर्वोरितिदीर्घः स्थादोश्च ष्ठागतिनिवृत्तौइ त्यस्य दासंज्ञकानांच अद्यतन्या आत्मनेपदेपरे इत्वंभव ति समस्थित समस्थिषाताम् समस्थिषत अदित अदि षाताम् अदिषत अधित अधिषाताम् अधिषतष्ठागतिनि वृत्तौ डुदाञ्दाने डुधाञ्दानधारणयोः अद्यतनी त अ

नाम् अन्त सिचः स्यादेरिदयतस्मादात्मनेइत्याकारस्य इत्वम् अ
टिङ्क्स्वाश्चानिट इति सिज्लोपः संपूर्वो अञ्जात्यादिः समवप्रवि
भ्यः स्थ इति तिष्ठतेरात्मनेपदम् **भुवः सिज्लुकि** भूसत्ता
यामित्यस्य सिचो लुकि कृते सति गुणो न भवति अभूत् अभूता
म् अभूवन् इत्यादौ भवति भूस्थः सिचः परस्मै इति सिचो लु
क् भुवो वोन्तः परोक्षाद्यतन्योरित्यत्रैव वकारागमः सि
ज्लुकीति किम् अभविष्ट भूसत्तायां वि अति पूर्वो अद्यतन
सिच् इट् गुणः कर्मव्यतिहारे आत्मनेपदम् **सूतेः पञ्चम्या**
**म्** षूङ् प्राणिगर्भविमोचने इत्यस्य पञ्चम्यां परस्मां गुणो न
भवति अतस्मे पञ्चम्या इति आमः सुवै सुवावहै सुवामहै
पञ्चमी आत्मने ऐ आवहै आमहै अन्विलक् स्वरादि
विवर्णोत्वम् पञ्चम्या इति किम् सविता स्वसनी ना इट् गुणः
**देधीवेव्योश्च** देधीङ् दीप्तिदेवनयोः वेवीङ् वीतिना व
त्ये इत्येतयोर्गुणो न भवति देध्यनम् वेव्यनम् अङ्केति अट्
अण्वुकामनाकान्ता इत्यनादेशः यइवर्णोस्यासंयोगपूर्वस्या
नेकाचरस्येति यत्वम् देध्ये देध्यावहै देध्यामहै वेव्ये वेव्या
वहै वेव्यामहै पञ्चमी आत्मने उ ऐ आवहै आमहै यत्वम्
**रुदविदमुषग्रहां सनि** रुदिर् अश्रुविमोचने विद ज्ञाने मु
ष स्तेये एषां सनि परे गुणो न भवति रुरुदिषति विविदिषति
मुमुषिषति रोदितुमिच्छति वेदितुं मोषितुं धातोर्वेति सन् इ
ट् षत्वे सनीति किम् रोदिता वेदिता मोषिता **नाम्यन्ता**
**नामनिटाम्** नाम्यन्तानां धातूनां अनिटामिट्रहितानां गु
णो न भवति सनि परे चिचीषति निनीषति बुभूषति लव्

षति चेतुमिच्छति चेतं यवितं लवितं सन् ञुवोः उवर्णान्त
पादिभ्यश्चेतीड्भावः चिञ्‌इत्येतयोः स्वरान्तानां सनि इति दीर्घः
अनिटामिति किं शीङ्‌शयितुमिच्छति शिशयिषते पीङ्‌स्वप्ने शायितुमिच्छति सन्
इड्‌गुणः ए अय् शायिष इति स्थिते चरापरोल्लोति द्वित्वं अनादि
व्यञ्जनलोपः **सर्वेषामात्मने सार्वधातुके उत्तमे प**
**ञ्चम्याः** सर्वेषां धातूनां विकरणानां च गुणो न भवति सार्व
धातुके आत्मनेपदे परे उत्तमे पञ्चम्याः पञ्चम्या आत्मनेप
दे उत्तमपुरुषे एतद्भवत्येव स्तुते स्तुवीत स्तुताम् अस्तुत स्तु
ञ् स्तुतौ धात्वादेः षः सः तस्मिन्निहृते निमित्ताभावे नैमित्तिक
स्याप्यभावः वर्तते सप्तमी ईत पञ्चमी ताम् ह्यस्तनी त अ
ति अदादेर्लुक् स्वरादाविवर्णोस्य उव् ऊर्णुते ऊर्णुवीत ऊर्णुताम् अ
ऊर्णुत उद्दप्रभृतौ अन्विल्लुक् दादेर्घ इति दस्य घः अधिष्ठ
घभेभ्य इति तस्य धः भडान्तीयस्य तृतीय इति घस्य गः विकर
णस्य कुरुते कुर्वीत कुरुताम् अकुरुत डुकृञ् तनादेरुः क
रोतेरिति गुणः अस्योकारः सार्वधातुके गुणे चिनुते चिन्वी
त चिनुताम् अचिनुत चिञ्‌चये श्रुः स्वादेः सप्तम्यां नोर्वकारो
विकरणस्येति वत्वम् आत्मने इति किम् एति इण्‌गतौ दोग्धि
पूर्ववद्गुणादि सार्वधातुके इति किम् चेष्यते शोष्यते भविष्य
न्तीस्यते दोग्धासे श्वस्तनी आत्मने मध्यमैकवचने तासेऽप
धातुगुणः उत्तमे पञ्चम्या इति किम् स्तवै स्तवावहै स्तवामहै
करवै करवावहै करवामहै सुनवै सुनवावहै सुनवामहै
षुञ् स्तुञ् हुञ् भृञ् अभिषवे धात्वादेः षः सः पञ्चमी ए
आवहै आमहै अन्विल्लुक् ह्रुञः तनादेरुः षुञः श्रुः स्वादेः गु

णः द्वित्वबहुत्वयोश्चपरस्मै सर्वेषांधातूनांविकरणानां गुणोनभवति सार्वधातुकपरस्मैपदेद्वित्वबहुत्वयोश्चपरयोः अनुत्तमेपञ्चम्याः तथाभवत्येव स्तुतः स्तुवन्ति स्तुताम् स्तुवन्तु अस्तुताम् अस्तुवन् अन्विलङ् स्वरादावित्युवर्णान्तस्यधातोरित्युव् दुग्धः दुहन्ति दुग्धाम् दुहन्तु अदुग्धाम् अदुहन् अन्विलङ् कुरुतः कुर्वन्ति कुरुताम् कुर्वन्तु अकुरुताम् अकुर्वन् तनादेरुरित्यादि पूर्ववत् चिनुतः चिन्वन्ति चिनुताम् चिन्वन्तु अचिनुताम् अचिन्वन् चिञ् चयः स्वादेः नो वंकारोविकरणस्येतिवत्वम् सुनुतः सुन्वन्ति सुनुताम् सुन्वन्तु असुनुताम् असुन्वन् द्वित्वबहुत्वयोरितिकिम् पति दोग्धि करोति चिनोति सार्वधातुकेइतिकिम् स्तोतारौ स्तोतारः अनुत्तमेपञ्चम्याइतिकिम् स्तवाव स्तवाम दोहाव दोहाम करवाव करवाम सुनवाव सुनवाम पञ्चमीआव आम अन्विलङ् तनादेरुः उ स्वादेः उहेरुपधायागुणः अन्येषामनन्तयोरितिगुणः **परोक्षायांच** धातोर्गुणोनभवति परोक्षायांपरस्मैपदेद्वित्वबहुत्वयोः परयोः चक्रतुः चक्रुः दुदुहतुः दुदुहुः द्वित्वबहुत्वयोरितिकिम् अहंनिनय उदोहणलुत्तमोवेतिवृद्धिनिषेधः **सर्वत्रात्मने** धातोर्गुणोनभवति परोक्षायामात्मनेपदेसर्वत्रैकद्विबहुत्वेषुपरेषु चक्रे चक्राते चक्रिरे दुदुहे दुदुहाते दुदुहिरे **आशिषिचपरस्मै** धातोराशिषिपरस्मैपदेपरेगुणोन भवति नीयात् लूयात् परस्माइतिकिम् चेषीष्ट चिञ्चयोर्ग्राही: सीङ्गुणाभावत्वम् **सप्तम्यांच** धातोर्विकरणस्यचसप्तम्यां परस्मैपदेगुणोनभवति स्तुयात् तनुयात् सुनुयात् चिनुया

त **ह्रोव** द्विप्रत्यये च परे धातोर्विकरणस्य च गुणो न भवति स्व
दि **कुस्मि** विहि बुञ् इदम्प्रविदत्ता पञ्चमीदि अल्पिलक् दा
देर्घः कुपुश्यां देर्पिः श्वटात्ततीयस्तदर्थे इति च स्पगः सूत्र नो
स्वविकरणादसंयोगादिति हिलोपः **तुदादेरनि** तुदादि
गणपठितानां धातूनां गुणो न भवति अनि परे तुदति तु
दति लिखति तुदव्यथने गुदप्रेरणे क्षिनिवासगत्योः स्व
रादाविवर्णोतिइयु अनीतिकिम् तोत्ता अलनीता उपधागु
णः **आमिविदेरेव** विदत्तानेइत्यस्याम् परे गुणो न भव
ति विदांचकार उप्रविदजागृभ्योवाइत्याम् आमःकृञ् संवि
दांचक्रे समोगमृच्छि प्रच्छिस्वरत्यर्तिश्रुविदि—भ्यइत्यात्म
नेपदम् आमीतिकिं विवेद विदेरितिकिम् जागरांचकार जा
गरां चकार उपदाहृ जागृनिद्राक्षये प्राग्वत् आम् उप उ
पधागुणः जागृनामन्तयोरितिगुणः **कुटादेरनिनिज्ञ**
**स्तु** कुटकौटिल्ये पुटसंश्लेषणे कुचसङ्कोचे गुजशब्दे गु
डरक्षायाम् डिपक्षेपे छुरच्छेदने तुटकलहकर्मणि त्रुट
छुटच्छेदने गडबन्धे कुडघनत्वे कुडबाल्ये चु
डप्रतिघाते तुडतोदने स्फुडस्फुडसंवरणे उदात्त उदात्तेनः
गुदीडद्यमे उदात्त अनुदात्तेन गलवे भुविभ्रमने गुडरी
षोत्सर्गे स्फुगतिस्थैर्ययोः उदात्तः कुङ्शब्देच एते कुटादयः
एषां गुणो न भवति अनि निज्ञस्तु इत् इत् अइ वर्जितेषु प्र
त्ययेषु परेषु इत् इत् प्रदस्य गुणो भवत्येवेत्यर्थः कुटिता कु
टिष्यति अकुटीत् पुटिता पुटिष्यति अपुटीत् गुणनी ता
स्यति अगुणनी दि सिच् इट् ईट् इटईटीति सिचो लोपः कु

टिता कुटिते कुटितव्यम् पुटिता पुटिते पुटितव्यम् त्रुटित्वा
वितित्टच् त्रुटेर्भाक्रियायां क्रियायामिति किम् तव्यानीया
वितितव्यः नुविता धुविता गुविता नुवनम् धुवनम् गुव
नम् ग्रहेतिग्रुट् युवुक्रामनाकान्ताइत्यनादेशः स्वरादावि
वर्णोस्ब्व् अनुवीत् अधुवीत् अगुवीत् अयादि सिच् इट् ई
ट् इटश्चे—टीतिसिज्लोपः आगवत् उव् अनिनिजिड्विति कि
म् कोटयति कुटन्तं प्रयुङ्क्ते इन् उपधागुणः अकोटि अयत
भावकर्मणोश्चेति इट् उपधागुणः इचस्तलोपः अकोट अट् वि
जोविटि ओविजी भयचलनयोरित्यस्य इटिपरे गुणो न भवति
उद्विजिता उद्विजिष्यति उद्विजितुम् उद्विजितव्यम् इटीति कि
म् उद्वेजनम् युट् युवुक्रामिन्यादेशः वोर्णोः ऊर्णुञ् आ
दने इत्यस्य इटिपरे गुणो वा भवति प्रोर्णविता प्रोर्णुविता य
णः स्वरादाविस्ब्व् इटीति किम् और्णोत् ह्यस्तनी दि अडागमा
दिः अल्लिङ्क स्वरादीनां वृद्धिरादेः गुणो ह्यस्तन्यां चेति गुणः
**स्याद्दोरिदेयतन्यामात्मने** ष्ठा गतिनिवृत्तावित्यस्य दा
संज्ञकानां च अद्यतन्यामात्मनेपदे परे अन्त्यस्य इत्वं भवति
समस्थित समस्थिषाताम् समस्थिषत अदित अदिषाताम्
अदिषत अधित अधिषाताम् अधिषत स्यादोरित्यत्र स्थापि
तम् अद्यतन्यामिति किम् संस्थास्यते दास्यते धास्यते आत्म
नेइति किम् अस्थात् अदात् अधात् अद्यतनीदि इस्यादा
पिबति भूभ्य इति ति सिचो लोपः **ऋचादेरागमो कारः स्व
रादनिविकरणे** ऋञ् मोचने ब्रश्चू छेदने विडू लाभे लि
प उपदेहे षिच क्षरणे अन्नदानास्विति तः कृती छेदने खिद

परितापे पिश अवयवे एते मुचादयः एषामनिविकरणे परे स्वरात्परो नकारागमो भवति मुञ्चति लुम्पति विन्दति लिम्पति सिञ्चति कृन्तति खिन्दति पिंशति आकारे मनोरनुस्वारः अन्त्यवर्ग्ये वर्गान्तः अनिविकरण इति किम् मोक्ता अस्तता **मस्जिनशोर्झटि** टुमस्जो शुद्धौ णश अदर्शने अनयोर्झटि परे स्वरात्परो नकारागमो भवति मङ्क्ता मङ्क्ष्यति अमङ्क्षीत् अनेन स्वरात्परो नकारागमः झटां तृतीय इति सस्य दः तवर्गस्य टेति दस्य जः अस्मिन् मस्जोर्झटि इति जकारस्य लोपः चवर्गस्य किरसवर्णे इति जस्य कः वर्ग्ये वर्गान्त इति नस्य ङः नशोऽर्थः नंष्टा नङ्क्ष्यति अनङ्क्षीत् अनेन नागमः तस्य मनोरनुस्वारः छशोश्चेति शस्य षः षोढः कः से झटीति किम् मज्जति नश्यति दिवादेर्यन् **रधिजभोः स्वरे** रध हिंसायाम् जभ जृभि गात्रविनामे अनयोः स्वरे परे स्वरात्परो नकारागमो भवति रन्धयति जम्भयति रन्धनं प्रवृद्धे जम्भमाने इन् अनेन नागमः रन्धकः जम्भकः वुण् एउ अनुकानना कान्त इति अकश्चादेशाः नागमः स्वरे इति किम् रध्यते जभ्यते **नेटि रधेरपरोक्षायाम्** रध हिंसासंराध्योर्नित्यस्य इटि परे स्वरात्परो नकारागमो न भवति अपरोक्षायां परोक्षायां यद्दृष्टं तत्र भवत्येव रधिता रधिष्यति अराधिष्यत् रधितव्यम् तव्यानीयाविति तव्यः अपरोक्षायामिति किम् ररन्धिव ररन्धिम पूर्वेण नागमः **रभिलभोरविकरणपरोक्षयोः** रभ राभस्ये डुलभष् प्राप्तौ अनयोः स्वरे परे स्वरात्परो नकारागमो भवति अ

विकरणापरोक्षयोर्यः स्वरस्तं वर्जयित्वा रम्भयति रम्भमाणं प्रयु
क्तेलम्भमानं इन् अनेन नागमः वर्ग्येवर्गोन्त्यः अविकरणापरोक्ष
योरितिकिम् रभते लभते रेभे लेभे असंयोगव्यञ्जनमध्येना
देशादेः परोक्षायामित्येत्वाभ्यासलोपौ स्वरइतिकिम् रभ्यते
लभ्यते सार्वधातुकेयण् हुधुझभ्यो हेर्धिः हुदानादन्तयो
रित्यस्मात् झलन्ताच्च परस्य हेः धिरादेशो भवति जुहुधि चका
द्धि चकास्तेर्दीप्तौ पञ्चमी हि अविलुक् अनेन हेर्धिः धुटांस्तृती
यश्चतुर्थे इति सस्य दः सावर्ण्यात् सस्य तृतीयो दः जुहोतेः जुहो
त्यादेश्चेति लुक् चकासः अदादेर्लुक् भिद्धि स्वराद्रुधादेः प
परोनश्चाह्नः तस्य रुधादेर्विकरणान्तलोपः हेर्धिः पिण्ढि पि
ण्ढि शिष्लृ विशेषणे पिष्लृ संचूर्णने द्विस्वराद्रुधादेः परोनश्चा
ह्नः रुधादेर्विकरणान्तलोपः धुटांस्तृतीयश्चतुर्थे इति षस्य डः
तवर्गश्च टवर्गे इति नस्य णः हुधुझभ्यामितिकिम् क्रीणीहि क्री
णीहि नाभ्यादेः उभयेषामीकारो व्यञ्जनादावितीकारः हेरि
तिकिम् जुहोति अविलुक् असेरेः असभुवीत्यस्मात्परस्य हेः
एधि आदेशो भवति एधि अस हि अविलुक् आस्त्यादेरित्यका
रलोपः दास्योरभ्यासलोपश्चेति सकारस्य एत्वम् अनेन हेर्धिः
शा च शासेः शास अनुशिष्टौ इत्यस्मात्परस्य हेर्धिरादेशो
भवति शाधि शासेश्च शाआदेशः शाधि अविलुक् हेर्धिः लोपो
ऽभ्यस्तादन्तिनः अभ्यस्तात्परस्य अन्त् इत्यस्य नकारलोपो
भवति दधति दधतु जुह्वति जुह्वतु डुदान धा[illegible] दोः अ
न्ति अन्त अति जुहोत्यादेश्च लुक् जुहोतेः सार्वधातुके इति उ
कारस्य वत्वम् जक्षति जक्षतु जक्षत्यादेश्चेति अ[illegible]भ्यस्तसंज्ञा

अभ्यस्तादितिकिम् यान्ति याप्यते अविलुक् अन्तिन इति
किम् ददीरन् दा सप्तमी ईरन् अभ्यस्तानामाकारस्येत्यालो
पः **आत्मनेपदेष्वनकारात्** आत्मनेपदेषु अन्तशब्द
स्य नकारलोपो भवति अनकारात् अकारात्परस्य तु न भव
ति कुर्वते चिन्वते लुनते कुर्वताम् चिन्वताम् लुनताम् अ
कुर्वत अचिन्वत अलुनत अन्ते अन्ताम् अन्त तनादेः उः
स्वादेः नः क्र्यादेः करोतेर्गुणः अस्योकारः सार्वधातुके इत्युत्व
म् नोर्वकार इति नोर्वत्वम् श्नादीनां ह्रस्वः क्र्यादीनां विकरण
स्येत्यालोपः अकृषत अद्यतनी अन्त सिच् ऋदन्तानां चेति
गुणाभावः अनेन नलोपः आत्मने इति किं चिन्वन्ति लुनन्ति
अनकारादितिकिम् प्लवन्ते च्यवन्ते प्लुङ्गतौ च्युङ्गतौ अ
न्ते अविगुणः अकारस्य तु रलोपः **शीङो रन्तेऽन्तादिः** शी
ङ् स्वप्ने इत्यस्मात्परस्यान्त इत्यस्य आदिः रेफागमो भवति इका
र उच्चारणार्थः शेरते शेरताम् अशेरत अन्ते पञ्च अन्ताम्
ह्यस्त अन्त अनेन रेफागमः शीङः सार्वधातुके इति गुणः अन्ते
रितिकिम् शेते शयाते ते आते **वेत्तेः संप्रति परस्मैवा
णादयः** विद ज्ञाने इत्यस्मात् परेषां संप्रति वर्तमाने कालेवि
हितायावर्तमानाविभक्तेः सम्बन्धिनां परस्मैपदानां णादी
नां यथासंख्यं अट् आदय आदेशा वा भवन्ति वेद विदतुः वि
दुः वेत्थ विदथुः विद वेद विद्व विद्म अवि द्वित्वबहुत्वयो
रितिगुणाभावः स्थानिवदादेश इति वचनाद्वर्तमानैवास्थिते
तिद्विवचनादिनास्ति पक्षे वेत्ति वित्तः विदन्ति वेत्सि वित्थः
वित्थ वेद्मि विद्वः विद्मः संप्रतीतिकिम् विद्यात् अविलुक्

परस्मैपदानामितिकिम् संविद्रे संविदाते संविद्रते ते आते अ
न्ते समोगमृच्छ्योरात्मनेपदम् वक्तव्येवेत्ते र्विभाषेति रेफाग
मः पक्षे संविदते आत्मनेचानकारादितिनलोपः **ब्रुवः प**
**ञ्चानामादित आहश्च** ब्रूञ् व्यक्तायां वाचि इत्यस्मात्प
रेषां पञ्चानां वर्तमानायाः संबन्धिनामादितः आदेशः स्थिता
नां पञ्चानां वचनानामिति तस् अन्ति सिप् थस् इत्येतेषां यथा
सांख्यं पञ्च वा णलादयः णल् अतुस् उस् थल् अथुस् इत्ये
ते आदेशा भवन्ति ब्रूञश्च आहि आदेशो भवति इकार उच्चा
रणार्थः आह आहतुः आहुः आत्थ आहथुः थलिपोपस्थे
तिरूपथः तस्य ब्रुवो येषां शिटां प्रथमस्य तिनः पक्षे ब्रवीति ब्रू
तः ब्रुवन्ति ब्रवीमि ब्रूमः तिसोः ब्रुव ईट् वचनादिषु णः सर्वत्र
अन्विर्वक्त पञ्चानामितिकिम् ब्रूथ **थेश्वश्च** हन्तः स्यादेश
थलिपरे हन्तस्य आहि आदेशात्यन्तस्य आदेशो भवति आ
त्मसाधनेऽवगन्तव्यः अडादिथकारादन्यत्र प्रत्यये न भवति इ
थ **अकारादृटौ** आकारान्तस्य अटृ औकारादेशो भवति
पपौ अट इति किम् पपिथ पल् दिवे ३३ **ऋच्छन्ताश्चेरगु**
**णे** धातोरन्त्य ऋकारस्य अगुणे प्रत्यये परे इर् आदे
शो भवति किरति गिरति कॄ विक्षेपे गॄ निगरणे अन्विरुदादे
रनीयगुणात्वम् कीर्यते गीर्यते सार्वधातुके यक् अनेन ऋ
कारस्येर् नामिनोर्वोरितिदीर्घः अगुण इति किम् करिता
**उरोष्ठ्योपधस्य च** ओष्ठ्योपधस्य धातोरन्तस्य ऋकारस्य उर्
आदेशो भवति अगुणे प्रत्यये परे आस्तीर्यते आभूर्यते पॄ पाल
न पूरणयोः भृ भर्जने ते सार्वधातुके यक् अनेन ऋकारस्य उ

र् नामिनोर्वोरिति दीर्घः बुभूर्षति बुभूर्षति परिदित्रासिच्छति
भवितुमिच्छति सन् ऋदन्तानां सनि वा इडभावः सनि वा इ
ति तन्त्रान्तरात् अनेन इड् नामिनोर्वोरिति दीर्घः द्विर्वं अभ्यास
कार्यम् सनिचानि टीति सेनणत्वम् ओष्ठ्योपधस्येति किम् की
र्यते कृविक्षेपे ऋदन्तस्येति इर् दीर्घः अपतो इति किम् परि
ता ॥ अस्यसमानलोपोपधाया ह्रस्वश्चणि ॥ असमान
लोपस्योपधा ह्रस्वयस्य समानो वर्णो न लुप्यते तस्य उपधाया
ह्रस्वो भवति इनि चण्परे परतः अपीपचत् अपीपठत् पच
लेपाद्युक्त पठन्तेप्राप्तुक्त इन् अस्योपधेति दीर्घः दिचण्
अद्यतन्यादिः सर्वविधिभ्यो लोपविधिर्बलवान् इत्यादिकारि
तलोपः इनि कृतं स्थानिवदिति वचनात् पच् पठ् द्विर्वं
अभ्यासस्यादिर्व्यञ्जनम् ततः प्रत्ययलोपे प्रत्ययलक्षणेन
अनेन उपधाह्रस्वः अलोपे समानस्य सन्वदिति सन्वद्भावा
त्सन्यवर्णस्येति इत्वम् दीर्घो लघोः असमानलोप इति किम्
अचरराजत् राजानमचक्रमीत् राजन्शब्दात् इन्कारितेच
धात्वर्थे इति इन् इनि लिङ्गस्यानेकाक्षरस्येत्यन्त्यस्वरादिलोपः
दिचण् कारितलोपादि पूर्ववत् उपधाया इति किम् अचकां
क्षत् काक्षि काङ्क्षायाम् इकारो नकारागमार्थः अनिदनुब
न्धेति ज्ञापकान्नकारागमः मनोरनुस्वारो धुटीत्यनुस्वारः
तस्य वर्गे वर्गान्त इति ङः काङ्क्षेपास्यक्त इन् दिचण् प्राग्वत्
चणीति किम् पाठयति ॥ न शास्वृदनुबन्धानाम् ॥ शा
संस्त्राशीःशासिव्यस्य ऋटकारानुबन्धानां च धातूनां चण्परे इ
निपरतः उपधाया ह्रस्वो न भवति अशशासत् अराजत्

अललोकत् अडुढौकत् अययाचत् शासु अनुशिष्टौ राजृ दीप्तौ लोकृ दर्शने ढौकृ गत्यर्थः टुयाचृ याच्ञायाम् ऋकार इदर्थः शासं ने प्रायुङ्क्त एवं राजललोकमाने ढौकमाने याचमाने इन् दिचण् ढौके: पूर्व इस्व स्वादेशः इत्यभ्यासस्य उकारो ह्रस्वः लोपः पिबतेरीच्चाभ्यासस्य पा पाने इत्यस्य इति चण्परे परतः उपधाया लोपो भवति अभ्यासस्य च ईत्वम् अपीप्यत् अपीप्यताम् अपीप्यन् पिबन्तं प्रायुङ्क्त प्रायुङ्क्तातां प्रायुङ्क्त इति वाक्ये कृते इन् पाशासाह्वाव्यावेपामिनिः इति पा इत्यस्य आकारस्य आयि दिचण् सर्वविधिभ्यो लोपविधिर्बलवानिति नेनादादुपधालोपः इनिकृतस्यानिवदिति पाद्विर्व तस्मान्ने नईत्वम् तिष्ठतेरित् ष्ठा गतिनिवृत्तावित्यस्य इति चण्परे परतः उपधाया इत्वं भवति अतिष्ठिपत् धात्वादेः षः सः नामिस्यश्चेति ना एकारात् ठस्य थः तिष्ठन्तं प्रायुङ्क्त इन् अर्तिह्रीव्लीरीक्ष्माय्यादन्तानामिति पागमः दिचण् कारितलोपः अनेन उपधाया इत्वम् इनिकृतस्यानिवदिति स्थाद्विर्व शिरोऽघोष इति सकारे निहते था अवशिष्यते द्वितीयचतुर्थयोरिति प्रस्यतः सन्वद्भावादित्वम् निमित्तात्प्रत्यये निश्चात् मकारस्य षत्वं तवर्गस्य टवर्ग इति थस्य ठः जिघ्रतेर्वा घ्रा गन्धोपादाने इत्यस्य इति चण्परे परतः उपधाया इत्वं वा भवति अजिघ्रिपत् जिघ्रन्तं प्रायुङ्क्त इन् आत्वस्यागमः दिचण् कारितलोपः अनेन उपधाया इत्वम् द्विर्वं अभ्यासकार्यम् सन्वद्भावादित्वम् पक्षे अजिघ्रपत् इत्य समाने उपधा ह्रस्वः अन्यआभ्यत् इति [illegible]

दः पञ्चमः ५ **अनिदनुबन्धानामगुणेऽनुषङ्ग
लोपः** अनिदनुबन्धानां येषामिकारोऽनुबन्धो नास्ति तेषां धा
तूनामनुषङ्गलोपो भवति अगुणे प्रत्यये परे स्रस्यते ध्वस्यते
स्रन्सु ध्वन्सु अवस्रंसने ते सार्वधातुके यण् अनेनानुषङ्गलो
पः सनीस्रस्यते दनीध्वस्यते बनीभ्रश्यते अत्यर्थं स्रंसते ध्वंस
ते भ्रंश्यते धातोरेकस्वरादिति यङ् आहुः द्वित्वं वन्ति स्रन्सीतिनी
आगमः अनुषङ्गलोपः नलोपकारानुबन्धेति अगुणत्वम् स्रस्तः
ध्वस्तः भ्रष्टः गत्यर्थाकर्मकेति क्तः केय एवमस्य योक्तुर्वर्ज्जमिति
य एव ज्ञावादगुणत्वेनानुषङ्गलोपः झषो झेति घस्य धः तव
र्गस्य घटेति तस्य टः अनिदनुबन्धानामिति किम् वन्द्यते व
दि अभिवादनस्तुत्योः इकारो नकारागमार्थः अगुणे इति किम्
स्रंसिता ध्वंसिता भ्रंशिता **नश्नाद्विकरणात्** अनि
दनुबन्धेति निवृत्तम् नश्नाच्च विकरणात् परस्यानुषङ्गस्य
लोपो भवति हिनस्ति हिंस्तः हिंसन्ति भनक्ति भङ्क्तः भञ्जन्ति
तृहि हिसि हिंसायाम् इकारो नकारागमार्थः भञ्जो आमर्दने
तिनम् अन्त्यस्वराद्धातोः परो नश्च आहुः अनेनानुषङ्गलोपः द्वित्व
बहुत्वयोः श्नस्यादेर्विकरणाल्लोपः मनोरनुस्वारः भञ्जेश्चव
र्गस्य किः ध्रुटि वर्गे वर्गान्तः विकरणादिति किम् नन्दति टुन
दि समृद्धौ अनिदनुबन्धानामिति ज्ञापकान्नकारागमः
**परोक्षायामिन्धिश्रन्थिग्रन्थिदम्भीनामगुणे** ञिइ
न्धी दीप्तौ श्रन्थ ग्रन्थ सन्दर्भे दम्भु दम्भे एषां अगुणायां परो
क्षायां परस्यामनुषङ्गलोपो भवति समीधे इन्धु संपूर्वः परो
क्षाए अनेनानुषङ्गलोपः द्वित्वे श्रेथतुः श्रेथुः ग्रेथतुः ग्रेथुः

देभतुः देभुः अनस् उस् द्विर्वे त्फल भज त्रप श्रन्थ ग्रन्थ दम्भी
नां वेत्येत्वाभ्यासलोपौ अनुषङ्गलोपः **णलि च** श्रन्थादीना
मनुषङ्गलोपो भवति णलि परे श्रेथिथ ग्रेथिथ देभिथ पूर्व
वदेत्वाभ्यासलोपौ अनेन नलोपः **दंशिसञ्जिस्वञ्जिर**
**ञ्जीनामनि** दंशादशने षञ्जसङ्गे रञ्जरागे एषामनि परे
अनुषङ्गलोपो भवति दशति सजति रजति अनीति किम् दं
शः सङ्गः परिषङ्गः भावे घञ् रज्यतेऽस्मिन्निति रङ्गः अकर्तरि
च कारके संज्ञायामित्यधिकरणे घञ् **अस्योपधाया दी**
**र्घो वृद्धिर्नामिनामिनिश्चट्सु** उपधाभूतस्याकारस्य
दीर्घो भवति नामिनां चान्तभूतानां वृद्धिर्भवति इनि इचि अ
टि परे पाचयति पाठयति चाययति नाययति यावयति भा
वयति कारयति तारयति पच् पठ् चिञ् चयेणीञ् प्रापणे
णो नः यु मिश्रणे भू सत्तायाम् डुकृञ् करणे तॄ प्लवनतरण
योः पचन्तं प्रयुङ्क्ते एवं पठन्तं चिन्वन्तं नयन्तं यवन्तं भवन्तं
कुर्वन्तं तरन्तं इति वाक्ये कृते धातोश्च हेतौ विनिः इन् अनेनो
पधाया अकारस्य नामिनां च वृद्धिः इति अविस्मृताः इचि यथा
अपाचि अपाठि अचायि अनायि अयावि अभावि अकारि अ
तारि अद्यतनी त भावकर्मणोश्च इति इच् अनेन दीर्घवृद्धी इच
सलोप इति तकारस्य लोपः अटि पपाच पपाठ चिचाय निनाय
नुभाव ललाव चकार ततार कृञ् लूञ् छेदने उत्तमैकव
चने अटि वृद्धिदीर्घौ वा भवतः णलुत्तमो वेति तन्त्रान्तरात् अहं
पपाच पपच चिचाय चिचय निनाय निनय **स्मिचिपरस्मै**
**स्वरान्तानाम्** स्वरान्तानां धातूनां सिचि परस्मैपदे परे अ

न्यस्य वृद्धिर्भवति अप्रैषीत् अनैषीत् अद्रौषीत् अकार्षीत् अयादि सिच् सिच इति ईट् वृद्धिः अज्ञात्वादि अनेन वृद्धिः से ट्यपि सिचि वृद्धिर्भवति अतारीत् अलावीत् लूञ् वनन तरण योः लूञ्छेदने अयादि अज्ञात्वादिः सिच् इट् ईट् इटस्येटी ति सिज्लोपः अनेन वृद्धिः परस्मा इति किम् अचेष्ट चिञ् चये अयत सिच् गुणः निमित्तात्प्रत्यये निषः तवर्गस्य षट्वर्गादि ति तस्य टः स्वरान्तानामिति किम् अकोषीत् कुष निष्कर्षे अ अयादि सिच् इट् ईट् इटस्येटीति सिज्लोपः उपधागुणः अ

**जन्तानामनिटाम्** अज्जन्तानां धातूनामनिटा मिङ्हितानां सिचि परस्मैपदे परे नामिनां वृद्धिर्भवति अभै त्सीत् अरौत्सीत् भिदिर् विदारणे रुधिर् आवरणे दि सिच् ई ट् अनेन वृद्धिः त्वदि च दि भिदी ति इड भावः अद्यो घ घो धि टा मि ति दस्य तः अनिटामिति किम् अकोषीत् अस्य च दीर्घः अज्जना न्तानामनिटां धातूनां सिचि परस्मैपदे परे अकारस्य दीर्घो भव ति अपाक्षीत् अभाङ्क्षीत् पच् भञ्जो आमर्दने अयादि सिच् ई ट् अनेनाकारस्य दीर्घः चवर्गस्य किः वर्गे वर्गान्तः षत्वम् अनि टामिति किम् अरक्षीत् **सेटो वा** सेटो धातोरकारस्य वा दी र्घो भवति सिचि परस्मैपदे परे अकणीत् अकाणीत् अरणीत् अराणीत् कण रण शब्दे अस्येति किम् अदेवीत् दिवु क्रीडादौ अयादि सिच् इट् ईट् उपधागुणः **वदव्रजरलन्तानां च** वदव्रजोर्यावाचि व्रज गतौ अनयोः तथा रेफान्तानां लकारा न्तानां च धातूनां अकारस्य दीर्घो भवति सिचि परस्मैपदे परे अवादीत् अव्राजीत् असारीत् अफालीत् वदव्रजोर्यावाचि

अजागतौ स्वरच्छअगतौ फलनिष्पत्तौ असोतिकिम् अहोरीत् अखो
रीत् त्सरछ्वविलेखने उपधागुणः **श्विजाग्येर्गुणः** टुओश्वि
गतिवृद्ध्योः जागृनिद्राक्षये अनयोः सिचिपरस्मैपदेपरेगुणोभव
ति सिचिपरस्मा इतिवृद्धिः प्राप्ता अश्वयीत् अजागरीत् अयदि
सिच् इट् ईट् अनेनगुणः इटईटीतिसिज्लोपः **ऊर्णोतेर्वा**
ऊर्णुञ् छादने इन्यू सिचिपरस्मा इतिवृद्धिः पक्षेनेनगुणः औ
र्णावीत् और्णोवीत् स्वरादीनांवृद्धिरादेरितिऊकारस्यवृद्धिः
**अतिसत्योर्वाणि** ऋगतौ ऋस्रगतौ ऋगतिप्रापणयोः
सृगतौ इतिवा एषामणिपरेगुणोभवति नणकारानुबन्धे
तिनिषेधः प्राप्तः आरत् असरत् दिशघादिशृनादित्वण्
अनेनगुणः अतेर्ऋवर्णस्याकारः सर्तेः अड्वागादिः अतिस
र्त्योरितिकिम् अघृषत् अणीनिर्कि ऋतःसृतःनिष्ठेतिक्तः **जा**
**गर्तेःकारिते** जागृनिद्राक्षये इत्यस्यकारितेपरेगुणोभवति
वृद्धिःप्राप्तःजागरयति जागर्तंप्रयुङ्क्ते इन् कारितेइतिकिम् ज
जागार **यक्ष्माशिषोर्ये** जागर्तेर्यणिआशीर्यकारेचपरेगु
णोभवति नणकारानुबन्धेति आशिषिपरस्मैइतिनिषेधःप्रा
प्तः जागर्यते जागर्यात् यक्ष्माशिषोरितिकिम् जागृयात् स
समीयात् अविलक येइतिकिम् जागाविषोष्ट उपदेशेस्वरा
न्तानांहनग्रहदृष्टवामपि स्याशीष्वा सिसीष्टादाविद्वेत्वड्वावाद
स्यापधेतिवृद्धिः **परोक्षायामगुणे**

जागर्तेःपरोक्षायामगुणेप्रत्ययेपरेगुणोभवति जजागर
तुः जजागरुः जजागरे त्वयापरोक्षायांचेत्यगुणत्वम् परोक्षा
यामितिकिम् जागृतः वर्तमानातस् अगुणइतिकिम् जजा

गार ऋतश्चसंयोगादेः संयोगादेर्ऋकारस्य परोक्षायाम् गुणो वर्णगुणो भवति सस्वरतुः सस्वरुः दध्वरतुः दध्वरुः सस्वरे दध्वरे स्मृ ध्यानें ध्वृ हूर्छने परोक्षा अतुस् उस् एद्विर्वं अकारऋवर्णस्य अनादिव्यंजनलोपः द्वितीयचतुर्थयोरितिधस्यदः अनेनगु णः संयोगादेरितिकिम् चकृतुः चक्रुः अगुणोइतिकिं सस्वार दध्वार ऋदन्तानां च ऋदन्तानांधातूनांपरोक्षायामगुणोप्रत्ययेपरे गुणोभवति विचकरतुः विचकरुः निजगरतुः निजगरुः तस्तरतुः तस्तरुः कॄविक्षेपे गृनिगरणे विनिपूर्वो स्तृञ् आच्छादने अतुस् उस् द्विर्वं अकारऋवर्णस्यस्तॄनः शिटपरोघोषः अगुणइ तिकिम् विचकार ऋच्छृऋतः ऋच्छगत्त्यिन्द्रियप्रलयमूर्तिभा वयोरित्यस्यऋकारस्य गुणोभवति परोक्षायांपरस्यां आनर्छ आनर्छतुः आनर्छुः अट् अतुस् उस् द्विर्वं अकारऋवर्णस्य अस्यादेः सर्वत्रेतिदीर्घः ऋकारेचेत्यभ्यासस्यनागमः अनेनधातु ऋकारस्यगुणः परोक्षायामितिकिम् ऋच्छति शीङः सार्वधातुके शीङ्स्वप्नेइत्यस्यसार्वधातुकेपरे गुणोभवति सर्वेषामात्मनेसार्वधातुकेऽनतमेपञ्चम्याइतिनिषेधः शेते शयाते शेरते बहुत्वेशेतेविदन्तेरादिरितिरेफागमः सार्वधातुके किम् शिश्ये द्विर्वं यइवर्णस्येतिइत्वम् अयि ये शीङः अन्त्यस्यअयआदेशो भवति शाय्यते शाशाय्यते अत्यर्थं शेते यालोपे कस्वरादित्यिप्राङ्ः अनेनायिआदेशः द्विर्वं दीर्घोनागमान्तस्येतिदीर्घः आयिचिञ्दन्तानाम् आकारान्तानांधातूनाम अन्त्यस्य आयिआदेशो भवति इकारउकारणार्थः अदायि अपायि डुदाञ्दाने पापाने अयन अञ्जानादिः भावकर्मणोश्चेतिइ

च् इचस्तलोपः इचीतिकिम् दान्ति दाप् ल अन्ति अन्तिल्लक्
**शाच्छासाह्वाव्यावेपामिनि** शोतनूकरणे छो
छेदने षो अन्तकर्मणि ह्वेञ् स्पर्धायांशब्देचव्येञ् संवरणे
वेञ्तन्तुसन्ताने पापाने पैओवैशोषणेइतिवा पातेर्लोन्त इ
तिलकारागमोवक्ष्यते एषामन्त्यस्यइनिपरे आयितादेशो
भवति शाययति छाययति अवसाययति साययति ह्वाय
यति व्याययति वाययति पाययति यप्रत्ययेग्रुंक्ते एवंश्यन्तं
स्यन्तं ह्वयन्तं व्ययन्तं वयन्तम् पिबन्तं पायन्तंवा धातोश्चदे
मावितिइन् अनेनायिः इनीतिकिं ध्यानम् सर्वत्रसन्ध्यक्षरा
न्तानामाकारः ग्रुह्वेति ग्रुह् ग्रुज्का मनाकान्ताइत्यनादेशः
**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यादन्तानामन्तःपोयलो
पोगुणश्चनामिनाम्** ऋगतिप्रापणयोः ऋसृगतावि
तिवा ह्रीलज्जायां व्लीवरणेरीगतिरेषणयोः क्नूयीशब्दे क्ष्मा
यी॰ एतन् एषां आकारान्तानांचयान्तानामिनिपरेपकारागमो
भवति क्नूयीक्ष्माय्योः यलोपः नामिनांचगुणोभवति अर्पयति
ह्रेपयति व्लेपयति रेपयति क्नोपयति क्ष्मापयति दापयति
धापयति ऋच्छन्तं इयृ तंवाप्रयुङ्क्ते जिह्रयन्तं व्लिनन्तं विलान्तं
क्नूयमानं क्ष्मायमानं ददतं दधतं इतिवाक्येकृते इन् अनेन
पागमः यलोपः नामिनांचगुणः **पातेर्लोन्तः** पारक्षणेऽ
स्यस्यइनिपरे लकारागमोभवति पालयति पान्तंप्रयुङ्क्ते इन्
**धूञ्प्रीञोर्नः** धूञ्कम्पने प्रीञ्तर्पणे प्रीञ्प्रीतौवा अ
नयोर्नकारागमोभवति इनिपरे विधुनन्तं प्रीणन्तं प्रीयमा
णं वाप्रयुङ्क्ते इन् अनेननागमः विधूनयति प्रीणयति

**भियःषुग्वा** ञिभीभये इत्यस्य इनि परे षुक् आगमो भवति वा अतो भीषयति बिभ्यन्तं प्रयुङ्क्ते इन् अनेन षुक् आगमः ककार आद्यन्तौ टकितावित्यर्थः उकार उच्चारणार्थः पक्षे भाययति ञ्णिक्रिया इन् वृद्धिः **स्फायेर्वादेशः** स्फायीओप्यायीवृद्धावित्यस्य इनि परे अन्त्यस्य वकारादेशो भवति स्फावयति स्फायमानं प्रयुङ्क्ते इन् अनेन यस्य वत्वं **रुहेःपोवा** रुह बीजजन्मनीत्यस्य इनि परे अन्त्यस्य पकारादेशो वा भवति रोपयति रोहयति बाहुलत्वात् रोहन्तं प्रयुङ्क्ते इन् उपधायागुणः अनेन वा पादेशः **शादेरगतौतः** शद्लृ शातने इत्यस्यान्त्यस्य इनि परे तकारादेशो भवति अगतौ गतावर्थे शादिर्यदा वर्तते तदा तकारादेशो न भवतीत्यर्थः फलानि शातयति शीयमानं प्रयुङ्क्ते इन् अनेन दस्य तः उपधादीर्घः अगताविति किम् गाः शादयति गमयतीत्यर्थः **हन्तेस्तः** हन हिंसागत्योरित्यस्य इनि परे अन्त्यस्य तकारादेशो भवति घातयति घ्नन्तं प्रयुङ्क्ते इन् अनेन नस्य तः उपधादीर्घः हस्य हन्तेर्ञ्णिन्निरिति हस्य घः **हस्य हन्तेर्ञ्णिन्निषु** हन्तेः ञ्णिन्निषु परेषु हकारस्य घत्वं भवति घातयति अघानि घ्नन्तं प्रयुङ्क्ते इन् अघत इञ् अनेन हस्य घः उपधादीर्घः हन्तेस्त इति नस्य तः इचस्तलोपः **लुप्तोपधस्य च** लुप्तोपधस्य हन्तेः यत्रास्य गमहनजनेत्युपधालोपः क्रियते तत्र हकारस्य घत्वं भवति घ्नन्ति घ्नन्तु अघ्नन् घ्नन्ति घ्नन्तु अनुगमहनेत्युपधालोपः अनेन हस्य घः लुप्तोपधस्येति किम् हन्ति हतः अन्विह ङ्क पञ्चमोपधाया धुडि चागुणे इति उपधादीर्घः वनति तनोत्यादिशामिधिङ्केटं भ्रष्टपञ्चमो

ह्नातः इत्याकारस्य अकारः नलोपश्च **अभ्यासाद्ध** अभ्यासात्पर
स्य हन्तेर्हकारस्य घत्वं भवति जघान जिघांसति हन्तुमिच्छतीति
र्थे तोर्वेति सन् हनिगमिङां सप्रथायाः इत्युपधादीर्घः न स्यम
नोरनुस्वारः जङ्घन्यते कुटिलं हन्ति गत्यर्थात्कौटिल्ये इति यङ्
चाप्यरोहेति द्वित्वं अनादिव्यञ्जनलोपः होजः अतोन्नोनुस्वारः
अनेन घत्वम् वर्गे वर्गान्तः **जेर्गिः सन्परोक्षयोः** जिजयेरस्य
स्य सनि परोक्षायां च परस्याम् गिरादेशो भवति जिगीषति जे
तुमिच्छतीति सन् अनेन जेर्गिः स्वरान्तानां सनीति दीर्घः द्वित्वं ह्रस्वः
कवर्गस्य चवर्गः परोक्षायां जिगाय जिग्यतुः जिग्युः अइ अव
स् उस् जेर्गिः आदिवृद्धिः अन्यत्र इवर्णस्येति यत्वम् जिग्ये जि
ग्याते जिग्यिरे आत्मने सन्परोक्षयोरिति किम् जेजीयते अत्य
र्थं जयतीति यङ् हः नाम्यन्तानां यस्यायीति दीर्घः **चेः किर्वा**
चिञ् चये इत्यस्य सन्परोक्षयोः परयोः किरादेशो वा भवति चिका
य चिक्यतुः चिक्युः चिचाय चिच्यतुः चिच्युः चिकीषति चिचीष
ति चेतुमिच्छतीति सन् स्वरान्तानां सनीति दीर्घः द्वित्वं सन्परोक्ष
योरिति किम् चेचीयते अत्यर्थं चिनोति यङ् हः नाम्यन्तानां य
स्यायीति दीर्घः **सणो लोपः स्वरेऽदन्ते** सण्प्रत्ययस्य दु
न्तवर्जिते स्वरे परे अकारलोपो भवति अधुक्षाताम् त्वयात्र
अनिदुपधो हृदुपधाले अद्यतनी सण् इसस्मनिटः
शिङन्तान्नाम्युपधादहशा इति सण् दुहेर्दादेर्घः तृतीयादेर्घ
ढधभान्तस्य धातोरादिचतुर्थत्वं स्ध्वोरिति दस्य धः षढोः कः
से इति कः अधोक्षाशिटांप्रथमः इतिच स्यकः षत्वम् अव
दुन्ते इति किम् अधुक्षन्त **दरिद्रातेरसार्वधातुके** दरि

ल क्षमत्र ठुठे॥



द्रादुर्दंतादित्यस्य अन्तलोपोभवति असार्वधातुकेपरे द
रिद्रयते दरिद्रयेते दरिद्रयन्ते बहुत्वेअसत्यपितरलोपः असा
र्वधातुकेकिम् दरिद्राति अन्विलक् **व्रश्चिमस्जोर्धुटि**
ओव्रश्चूछेदने टुमस्जोशुद्धौ अनयोरन्तलोपोभवति धुटिप
रे व्रष्टा व्रक्ष्यति अव्रक्ष्यत् नास्यातिस्यत् अनेनान्तलोपःक्षु
षोश्चेति षः तवर्गस्य चटेतिनस्यटः षढोःकःसे मङ्क्ता मङ्क्ष्यति
अमङ्क्षीत् मस्जिनशोर्धुटीतिनागमः अटांत्ततीयइतिस्थान
सावर्ण्यात्सस्यदः तवर्गस्यटवर्गइतिदस्यजः अनेनान्त्यजकार
स्यलोपः चवर्गस्यकिः वर्गेवर्गान्त इतिनस्यङः धुटीतिकिम्
वृश्च्यते मज्जते शदिज्येतिसंप्रसारणम् **यन्योकारस्य**
ओकारस्ययनिपरेलोपोभवति यति स्यति छ्यति ष्यति दो
व अवखण्डने षोअन्तकर्मणि धात्वादेःषःसः छोछेदने शो
तनूकरणे दिवादेर्यन् नकारइदार्थः अनेनओकारस्यलो
पः **आकारस्योसि** धातोआकारस्यलोपोभवति उसि
परे अदुः अगुः पापाने रादाने लाआदाने ह्यस्तनी अन्
अन्विलक् अनउस् अनेनालोपः उसीतिकिम् याति **स**
**न्यादेरेच** सन्यन्तरेपरेआकारस्यलोपोभवति गेगाङ्ग
तौ वर्तमानाआत्मनेपदउत्तमपुरुषैकवचनंए आन्वि न
स्वदीर्घान्त्यरलोपः अनेनआलोपः व्यतिरे व्यतिले रादाने
लाआदाने व्यतिपूर्वौ वतेप अन्विलक् अनेनआलोपः क
र्मव्यतिहारे आत्मनेपदम् **असोःसि** असभुवीत्यस्यसोसिप्र
त्ययेपरे असलोपोभवति असि वर्तसि अन्विलक् अनेना
न्यसकारस्यलोपःसोइतिइकारउच्चारणार्थः व्यतिसे अस्

वर्तसे कर्मव्यतिहारे आत्मनेपदम् व्यतिपूर्वः अत्विस्वक् अस्ते
रादेः अयकारलोपः अनेनसलोपः देधीवेव्योरिवर्णय
कारयोः देधीङ्.दीप्तिदेवनयोः वेवीङ्. वीतिना तुल्ये इत्ये
तयोः इवर्णयकारयोःपरयोः अन्तलोपो भवति आदेधिता
आदेधीत आदेधि आवेविता आवेवीत आवेवि सप्तमीआ
त्मनेपदेना इङ् सप्तमीईतअन्ततनी त इत् अनेनान्तलोपः
आदेध्यते आवेव्यते इवर्णयकारयोरितिकिम् आदीध्यकः
आवेव्यकः देधीवेव्योश्चेतिग्रहात्र्भावःयत्वम् अस
न्त्यहलोरस्यातेतल्लोपश्च अकारस्य अकारसन्त्यह
रे भवतः परयोश्चलोपः अकारेपरेऽकारः सन्त्यहलेपरे संध्य
नं भवति पचन्ति पचेवर्तमाना अन्ति प अन्ति असोन्ति
किम् यान्ति नामिव्यञ्जनान्ताद्यरादेः नाम्यन्ताद्व्यञ्ज
नान्तान्चलिङ्गान्यरस्य आद्यः आदिलोपो भवति अग्नीयते पटू
यते अग्निरिवाचरति पटुरिवाचरति कर्त्तर्याद्यःसलोपस्तेत्या
दिः अनेनाद्यरादिलोपः नाम्यन्तानामितिदीर्घः रेयते वाच्य
ते विद्युत्यते विद्वस्यते नामिव्यञ्जनान्तादितिकिम् इयेनाय
ते गमहनजनखनघसामुपधायाःस्वरादा
वनण्यपुत्र गम्लृगतौ हनहिंसागत्योः जनजनने ज
नीप्रादुर्भावे इति वा खनुअवदारणे अदेर्घस्लृ उपधाया उपधाया
लोपो भवति अण्प्रत्ययवर्जिते अतोस्वरादौ प्रत्ययेपरे जग्म
तुः जग्मुः जघ्नतुः जघ्नुः जज्ञतुः जज्ञुः जज्ञे जज्ञाते जज्ञिरे
चख्नतुः चख्नुः जक्षतुः जक्षुः अक्षस् उस् अनेनोपधालोपः
घसेर्लुप्तोपधस्यातिह्रस्वत्वं जनजननेइत्यस्य परस्मैपदम् ज

नीआङ्भ्यां वेइत्यस्यात्मनेपदम् तवर्गस्य टेतिनस्य णः अदेः वा परो
तायामिति चस्य लुगादेशः शासिवसिघसीनां चेति सस्य षः अ
घोषे प्रथम इति घस्य कः स्वरादाविति किं गम्यते अनणी
तिकिम् अगमत् अघसत् अदेर्घस्लृ सनद्यतन्योरिति घस्लृ
पुषादिसूत्रेणाण् अग्रताइतिकिम् गमनम् **कारितस्या
नामिद्विकरणे** कारितस्य लोपो भवति अनामिद्विकरणे
आम्इट्विकरणवर्जिते प्रत्यये परे कारणा हारणाकुर्वन्तः
प्रयुक्तिः हरतः इन् वृद्धिः इषिग्रुप्यासिचटिवान्दि कारिता
तेभ्योयुः प्रयुक्ता मनाकान्ता इत्यनादेशः अनेन कारितलो
पः स्त्रियामादाप् कार्यते हार्यते कुर्वन्प्रयुज्यते हरन् इन्
वृद्धिः ते सार्वधातुके यण् कारितलोपः अनामिद्विकरण इ
तिकिम् कारयाञ्चकार कुर्वन्तं प्रयोज इन् दीर्घः
चकारस्कासिन्याम् आमः कृञ् कारयिता पाचयिता कुर्वन्तं
प्रयोक्ता पचन्तं इन् वृद्धिः स्यसता इट् कारयति पाचयति
कुर्वन्तं प्रयुङ्क्ते पचन्तं इन् वृद्धिदीर्घौ ति आनि सर्वत्र कारि
तस्य गुणः **यस्यापत्यस्यास्वरपूर्वस्याधिनायीषु**
अपत्यस्यापत्यार्थे विहितस्य अस्वरपूर्वस्य स्वरः पूर्वो यस्य नास्ति
तथाविधस्य यकारस्यायिनि आयी ईप्रत्यये च परे लोपो भवति
गार्गीयति गार्गीयते गार्गी यणगर्गादेरिति यणः णकारो वृद्धि
रादैस्सलोइत्यर्थः आदिवृद्धिः इवर्णावर्णौ स्वरेये प्रत्यये चेत्यलो
पः गार्गीमिच्छत्यात्मनः गार्ग्यइवाचरति नाम्न आत्मेच्छायामि
तियिन् कर्त्तुराधिः यिन्यवर्णस्येतिईत्वम् पूर्वाचार्यसूत्याच्चस्य
यकारस्यलोपः गार्गीत्यत्रणपादितिई प्रत्ययः ईकारे स्त्रीकृते।

ह्रोप्यः अनेनयलोपः यस्येतिकिम् वासिष्ठीयति वात्सपत्येऽत्र ए् आपत्यस्येतिकिम् अश्वीयति आश्वायते अस्वरपूर्वस्येतिकिम् आग्नेयीयति आग्नेयी स्यआदेरेयण् अतोयेकादितिईप्रत्ययः यिन्नायीष्वितिकिं गार्ग्यकाम्यति **नलोपश्च** लिङ्गस्यान्तनकारस्यलोपोभवति यिन्नाय्योःपरयोः राजीयति राजायते विद्वस्यति विद्वस्यते राजानमिच्छत्यात्मनः राजाइवाचरति विद्वांसमिच्छत्यात्मनः विद्वानिवाचरति विद्वांसमिच्छत्यात्मनः विद्वानिवाचरति यिन् आयिः राजन् प्राक्प्रकृतिकार्यमन्तरङ्गमित्यादौनलोपेकृतेव्यञ्जनान्तत्वाभावाद्यादिलोपोभवति अन्यत्रादिलोपः **व्यञ्जनाद्दिस्योः** व्यञ्जनात्परयोर्दिस्योर्लोपोभवति अवेत् अद्वेट् अलेट् अधोक् विदज्ञाने द्विष अप्रीतौ उद्दअपूरणे लिहआस्वादने ह्लनीदि सि अन्वि अदादेर्लुक् उपधायागुणः अनेनदिस्योः लोपः हचाड्ढान्तेतिघस्यहस्यढः पदान्तेधढांप्रथमः उद्वेर्वीदेर्च्चः लोपेच दिस्योरितिदस्यधः व्यञ्जनादितिकिम् अपचत् अपचः दिस्योरितिकिंवेत्ति **यस्यानन्यधातोः** व्यञ्जनात्परस्ययकारस्य लोपोभवति अनाति अविकरणादन्यस्मिन्प्रत्ययेपरे अधातोः यातसंबन्धिनोयकारस्यलोपेनभवतीत्यर्थः पापचिता पापचिष्यते बेभिदिता बेभिदिष्यते अत्यर्थंपक्ता पच्यते भेत्ता भेत्स्यति धातोरेकस्वरादितियङ्प्रत्ययः द्वित्वं दीर्घोनामसन्यस्येतिदीर्घः गुणःक्ष्कीयिते इतिगुणः पापच्य बेभिद्य इति स्थिते भविष्यन्त्यांस्मे इस्य यस्यचलोपः अननीतिमत्वार्थंलक्ष्यते अननीतिकिं पापच्यते अधातोरितिकिं मथिता म

बन्धने अञ्जनादितिकिं लोलूयिता **अस्य च लोपः** अ
धातोरितिनिवृत्तम् अकारस्यलोपोभवति अनतिपरे पापचि
ता चिकीर्षिता अत्यर्थंपक्तापचाङ्ः कर्तुमेषिता सन् स्वरान्ता
नां सनीतिदीर्घः ऋदन्तस्येर् नामिनोर्वोरितिदीर्घः द्वित्वं इट् अ
नेनाकारलोपः चेक्रीयित यस्यानन्यधातोरितियलोपः कथय
ति स्तनयति कथवाक्यप्रबन्धे स्तनईश्वायाम् चुरादेश्चेतिइन् अ
नेनालोपः (कथयति स्तनयति कथवाक्यप्रबन्धे स्तनईश्वाया
म् चुरादेश्चेतिइन् अनेनालोपः) **सिचो यकारे** यकारादौ
प्रत्ययेपरे सिचोलोपोभवति अलविषम् अपाविषम् लूञ् छे
दने प अद्यतनी षम् सिच् इट् अनेनसिचोलोपः सिचइति
किम् चकाश्चिचकासदीप्तौ पञ्चमीदि हुधुड्भ्यां हेर्धिः धुटांतृ
तीयश्चतुर्थेइतिस्थानसावर्ण्यात्सस्यतृतीयोदः यकारेइति।
किम् अलाविषाम् **धुटश्च धुटि** धुटःपरस्यसिचोलोपोभ
वति धुटिपरे अभित्त अभित्थाः अबुद्ध अबुद्धाः भिदिर् विदा
रणे बुध अवगमने अद्यतनी तथास् सिच् अनेनसिचोलो
पः अघोषेष्वशिटांप्रथमइतिदस्यतः बुधेः ढधयभेभ्यस्तथो
र्धोधइतितथोर्धः धुटांतृतीयश्चतुर्थेइतिधस्यदः धुटीतिकिम्
अभित्सताम् अभुत्साताम् सिच् **ह्रस्वाच्चानिटः** ह्रस्वान्त
स्य अनिटःसिचोलोपोभवति धुटिपरे अकृत अकृथाः अ
द्यतथास् अनेनसिचोलोपः ऋदन्तानांचेतिगुणाभावः ऋ
तोऽवृङ्वृञइतिइडभावः ह्रस्वादितिकिम् अचेष्ट चिञ् प्रकृति
कार्यमन्तरङ्गमिति आदौगुणेकृतेह्रस्वाभावात्सिचोलोपोना
स्ति अनिटइतिकिम् अवारिष्टाम् वृञ्वरणे अद्यतनीताम्सि

नाभवति स्कोः संयोगाद्योरन्ते चेति सलोपः अनेन जस्य षः तव
र्गस्य षट्वर्गो ष्टवर्ग इति तस्य टः स्रष्टा स्रक्ष्यति सृजिदृशोरा
गमोऽकार इति जस्य षः मार्ष्टा मार्क्ष्यति उपधायाश्णोक्ते मर्जो
मार्ष्टिः भ्रज्जनम् भर्जनम् भ्रज्जकः भर्जकः अत्र भ्रज्जादेश
विकल्पः एवं तेन षत्वम् अन्ये यथा अवरीभट् अमरीमट्
असामाट् अयायट् अराराट् अबाभ्राट् अन्त्यार्थे अभ्रज्जात् अ
स्रजत् अभ्रज्जत् अयजत् अराजत् अभ्रजत् इति वा क्वेः क्
ने धातोरेकस्वरेति यशाद्धः वा चेकीयितस्येति लुक् भ्रजेः अ
दिज्यावयीति संप्र द्वित्वं अभ्यासकार्यम् रूमनोदी स्यस्तीदि
अन्विलक् दिलोपः स्कोः संयोगाद्योरिति सलोपः पदे भ्रज्जा
देशः उपधायाश्चाः राजिभ्राज्योरभ्यासस्यह्रस्वे कृते दीर्घोऽला
गमान्तस्येति दीर्घः अनेन जकारस्य षः तस्य पदान्ते झटां द्र
थम इति स्थानसावर्ण्यात् प्रथमः टः भ्रज्जेः मर्जो मार्ज्जिः
षत्वे प्राग्वत् झटीति किम् भ्रज्ज्यते झटां स्तीय इति स्था
नसावर्ण्यात् स्पत्तीयो दः तवर्गस्य टेति जः **छशोश्च**
छकारशकारयोः षत्वं भवति झटि पदान्ते च प्रष्टा प्रक्ष्य
ति वेष्टा वेक्ष्यति प्रच्छ ज्ञीप्सायाम् विशाप्रवेशाने नाम्याति
द्रष्टा द्रक्ष्यति अनेन छशोः षः प्रच्छेः निमित्ताभावे नैमित्ति
कस्यापि भाव इति छनिवृत्तौ च निवृत्तिः दृशोः सृजिदृशोरा
गमोऽकारः अनेन शस्य षः अन्ते अपरीपट् अदरीदट् अ
न्यार्थे मप्रच्छत् अपश्यत् धातोरेकस्वरेति यशाद्धः तस्य
लुक् प्रच्छेः ग्रहिज्यावयीति संप्र द्वित्वं [illegible] मनोर्वाद्या न्त
दि अन्विलक् दृशोः अकारागमः दिलोपः [illegible]

पदान्तेधकोमिति षस्य ढः उपधायाः गुणः पक्ते अनुदात्तस्य च
र्दुपधस्यान्यतरस्यामित्यकारागमः अटीतिकिम् द्रक्ष्यते
दृश्यते यत्नः सप्त **भाषितपुंस्कं पुंवद्दायौ** भाषित
पुंस्कं यदेकशेषं गतं स्त्रीलिङ्गं तदा ऽयि प्रत्यये परे पुंवद्भवति
पुंसि यद्रूपं तदाप्नोतीत्यर्थः ब्राह्मणीवाचरति ब्राह्मणा
यते पत्नी पत्नायते श्येनी श्येतायते हरिणी हरिताय
ते पतश्येत हरितादीनां तपोधान्नो नकारश्चेति स्त्रिया
मी प्रत्ययः तकारस्य नत्वं च कर्णयाधिः अनेन पुंवद्भाव
ईत्वे नत्वमिति द्वयमपि निवर्तते ब्राह्मणापत्नश्येत हारिता
भवन्तीत्यर्थः **आदातामाथामादेरिः** आत् अका
रात्परयोः आतां आथां इत्येतयोः आदेः इत्वं भवति पचेताम्
पचेथाम् पञ्चमी आताम् आथाम् अपि अनेनाकारस्येत्व
म् **आतेआथेइतिच** आते आथे इत्येतयोः आदेः
इत्वं भवति पचेते पचेथे वर्त आते आथे अपि अनेनआ
कारस्येत्वम् **याशाहस्य च सप्तम्याः** अकारात्परस्य
सप्तम्याः संबन्धिनो याशब्दस्येत्वं भवति पचेत् पचेताम्
पचेः पचेतम् पचेत पचेव पचेम यात् याताम् यास्
यातम् यात याव याम अपि अनेन याशब्दस्येत्वम्
कर्तव्यमित्यात् सन् आशीर्यात् अस्य च लोपः **यमुसो
रियमियुसौ** अकारात्परयोः याम् युस् इत्येतयोः
यथासंख्यम् इयम् इयुस् इत्येतावादेशौ भवतः पचे
यम् पचेयुः याम् युस् अपि आदितिकिम् क्रयाताम्
क्रयुः तनादेरुः करोतेर्विति गुणः अस्याकारः सप्तम्यां

चेस्सकारलोपः शमादीनां दीर्घो यनि शमु उप
शमे तमु काङ्क्षायाम् दमु उपशमे श्रमु तपसि खेदे च क्ल
मु ग्लानौ भ्रमु अनवस्थाने क्षमूष् सहने मदी हर्षे एते शमा
दयः एषां ह्रस्वस्य दीर्घो भवति शाम्यति ताम्यति दाम्यति
श्राम्यति क्लाम्यति भ्राम्यति क्षाम्यति माद्यति दिवादेर्यन् य
नीति किम् शमिता ष्ठिवुक्लमाचमां शिति ष्ठिवु
निरसने क्लमु ग्लानौ चमु अदने आङ्पूर्वः एषां शिति परे ह्र
स्वस्य दीर्घो भवति ष्ठीवति क्लामति आचामति ॥ क्रमः पर
स्मै ॥ क्रमु पदविक्षेपे इत्यस्य शिति परे दीर्घो भवति क्रामति
परस्मै इति किम् क्रमते गमिष्यमां छः गम्लृ ग
तौ इषु इच्छायाम् यमु उपरमे एषामन्त्यस्य छत्वं भवति
शिति परे गच्छति इच्छति यच्छति तस्य द्विर्भावः अचो पिच
यम इति छस्य चः पः पिबः पा पाने इत्यस्य शिति परे
पिब् आदेशो भवति लोपः पिबतेरीचाभ्यासस्येति त्वापका
ह्रणाभावः पिबति ॥ घ्रो जिघ्रः ॥ घ्रा गन्धोपादाने इत्यस्य शितिप
रे जिघ्र् आदेशो भवति जिघ्रति ध्मो धमः ध्मा शब्दा
ग्निसंयोगयोरित्यस्य धम् आदेशो भवति शिति परे धमति
स्थस्तिष्ठः ष्ठा गतिनिवृत्तावित्यस्य शिति परे तिष्ठ् आ
देशो भवति तिष्ठति म्नो मनः म्ना अभ्यासे इत्यस्य शि
ति परे मन् आदेशो भवति मनति दाणो यच्छः
दाण् दाने इत्यस्य शिति परे यच्छ् आदेशो भवति यच्छति
दृशेः पश्यः दृशिर् प्रेक्षणे इत्यस्य शिति परे पश्य् आ
देशो भवति पश्यति अर्तेर्ऋच्छः ऋ गतिप्रापण

योविंत्यस्यानि परे ऋच्छ् आदेशो भवति ऋच्छति
सर्तेर्धावः सृगतावित्यस्य धाव् आदेशो भवति धाव
ति शदेः शीयः शद्ऌ शातने इत्यस्यानि परे शीय्
आदेशो भवति शीयते सदेः सीदः षद्ऌ विशरणे
इत्यस्यानि परे सीद् आदेशो भवति सीदति जाजने
विकरणे जनी प्रादुर्भावे इत्यस्य विकरणे परे जा आदे
शो भवति जायते ज्ञश्च ज्ञा अवबोधने इत्यस्य जा
आदेशो भवति विकरणे परे जानाति प्वादीनां ह्रस्वः
पूञ् पवने लूञ् छेदने स्तॄञ् छादने कॄञ् हिंसायाम् वृ
ञ् कम्पने शॄ हिंसायाम् पॄ पालनपूरणयोः स्तॄ हिंसाया
म् वॄ वरणे भॄ भर्जने दॄ विदारणे जॄ वयोहानौ नॄ नये
कॄ गतौ गॄ शब्दार्थः उदात्तः श्री वरणे री गतिरेषणयोः ली
श्लेषणे ब्ली गतौ वृत् प्वादयः एषां विकरणे ह्रस्वो भ
वति पुनाति लुनाति स्तृणाति कृणाति धुनाति शृणा
ति पृणाति स्तृणाति वृणाति भृणाति दृणाति जृणाति
नृणाति कृणाति गृणाति श्रिणाति रिणाति लिनाति
ब्लिनाति विकरणे इति किम् पूयते लूयते उकार
स्य वृद्धिर्व्यञ्जनादौ गुणिनि सार्वधातुके
उकारस्य वृद्धिर्भवति गुणिनि सगुणे व्यञ्जनादौ सार्वधा
तुके परे स्तौति यौति अयौत् ष्टुञ् स्तुतौ प्रस्रवणे रु
शब्दे क्षिणु इत्यादि अयं लक् अनेन उकारस्य वृद्धिः
व्यञ्जनादाविति किम् स्तवानि अस्तवम् पञ्चमी आलि
ह्यस्तनी अम् गुणः गुणिनीति किम् स्तुतः ब्रूते मानातः

सार्वधातुकेइतिकिम् कोता श्वस्तनीत्यगुणः ॥ ऊर्णोतेर्वा ॥
ऊर्णुञ् आच्छादनेइत्यस्माद्वृद्धिर्वा भवति व्यञ्जनादौ शितिनिसा
र्वधातुकेपरे प्रोर्णौति प्रोर्णोति ति अपित्त्वात् व्यञ्जनादा
विति किम् प्रोर्णवानि शितीतिकिम् प्रोर्णवितः ॥ ऊ
र्णोरपृक्तस्य च ॥ ऊर्णोतेरपृक्तयोः सिप्तिपोर्गुणो भवति
प्रौर्णोत् प्रौर्णोः व्यञ्जनादि सि स्वादीनामिडिरादेः अपि
त्त्वात् अनेनान्यस्यागुणः ॥ तृहेरिड्विकरणात् ॥
तृहि हिसि हिंसायामित्यस्य विकरणात्परइडागमो भवति
व्यञ्जनादौ शितिनिसार्वधातुकेपरे तृणेढि तृणेक्षि तृ
णेह्मि तृणेढु अतृणेट् ति सि मि तु व्यञ्जनादि स्वराद्
धादेरिति नशाह्वः अनिदनुबन्धेति नाधकारात् ङ्नानकार
स्य नशाह्वाद्विकरणादितिलोपः अनेनइडागमः अ
वर्णेऽवर्णेप ढोढः झषभेभ्यस्तितस्यधः तवर्गःष्टे
तियस्यढः ढेढलोपः व्यञ्जनादाविति किम् तृणहानि प
ञ्चमी आनि शितीतिकिम् तृणढानम् नशाह्वः ढत्व
ढत्वढलोपाःप्राग्वत् ॥ ब्रुव ईड्वचनादिः ॥ ब्रूञ् व्य
क्तायां वाचि इत्यस्मात्परस्य व्यञ्जनादेः शितो नि सार्वधातु
कस्य वचनस्यादिः ईडागमो भवति ब्रवीति ब्रवीतु अ
ब्रवीत् ति तु व्यञ्जनादि अपित्त्वात् अनेनईड् गुणः ओर
व् व्यञ्जनादाविति किम् ब्रवाणि शितीतिकिम् ब्रूतः
सार्वधातुकेइतिकिम् वक्ता
श्वस्तनीता ब्रुवो वचिः ॥ अस्तेर्दिस्योः ॥ अस भुवीत्य
स्मात्परयोःदिस्योः ईडागमो भवति आसीत् आसीः ह्यस्त

कीर्तितपरस्मैपदमिति त्यस्तनीदि अन्ति स्तक आवहि
लोपः अनेनादिचतुर्थत्वम् उपधाश्रुताः नस्यमादेः उ
पधायाः इति ऋकारः ढोढे पदान्ते च दम्भ प्रथमः स्तनी
यादेरितिकिम् अलेड् लिह आस्वादने त्यस्तनी दि अन्ति
स्तक दिलोपः ढोढे प्रथमः उपधाश्रुताः सकृपभाष
स्येतिकिम् अदेद् दिह उपचये त्यस्तनी दि अन्ति स्तक आ
वहिलोपः ... इति भस्मातः वाविरामे इति ढः
**नयोश्च दधातेः** डुधाञ् दानधारणयोरित्यस्या
दिचतुर्थत्वं भवति स्थोः परयोः तकारथकारयोश्च प
रतो धत्ते धत्थः धत्थ धत्से ध्वे तस् थस् अन्ति त्रदे
रादेशेति लक्ष्म दात्मादीनां द्वित्वे ह्रस्वः अभ्यस्ताना
माकारस्यलोपः प्रथमतृतीयौ प्राग्वत् अनेनादि
चतुर्थत्वम् **इति तत्र ह्वमादाप्यानप्रकरणम्**
**अथ षड्भपादः षष्ठः ९ औ इडागमो सार्वधात
कस्यादिव्यञ्जनादेरयकारादेः** धातोः परस्य
व्यञ्जनादेरसार्वधातुकस्यादेः इडागमो भवति अय
कारादेः यकारादिमसार्वधातुकं वर्जयित्वा भविता
भवितुम् भवितव्यम् वेदिता वेदितुम् वेदितव्यम् अ
सार्वधातुकस्येति किम् आस्ते वस्ते व्यञ्जनादेरितिकि
म् बभूव अयकारादेरिति किम् भूयते भूयात्
**स्तुक्रमिभ्यांचपरस्मै** स्तुङ् प्रस्रवणे क्रमु पादवि
क्षेपे आभ्यां परस्मैपदविषये आभ्यां परस्मैपदनिमि
त्ताभ्यां परस्य असार्वधातुकस्य व्यञ्जनादेः आदिरिडा

गमो भवति ग्रसविता ग्रसविष्यति क्रमिता क्रमिष्यति
सार्वधातुके च रुदादेः रुदादयः पंचधातवः ते
भ्यः परस्मिन्सार्वधातुके व्यञ्जनादावयकारादौ आदिति
डागमो भवति वशाद्यादिसार्वधातुके च रोदिति स्वपि
ति प्राणिति श्वसिति जक्षिति ईशः से सार्वधातुके
इत्येव ईशधातोः परस्मिन्सकारादौ सार्वधातुके
इडागमो भवति ईशिषे ईशिष्व वर्तसे पच्यस्व से इति
किम् ईष्टे अपि लङ् ऐष्टाः आस्तेति नाम्नः तवर्गस्य घटे
तिनस्य ठः ईडजनोर्ध्वे च ईडजनौ जनजनने अन
योः ध्वशब्दे सकाराद्यन्त सकारादौ सार्वधातुके च परे इडा
गमो भवति ईडिध्वे ईडिध्वम् अपि लङ् अनेनेट् स्य
स्तन्योः स्वरादीनां वृद्धिरादेः ऐडिध्वे ऐडिष्व जनिषे छान्द
सत्वादात्मनेपदम् द्विर्वचनोपधालोपाभावश्च अनिज
निषे व्यतिजज्ञिध्वम् व्यतिजज्ञिषे व्यतिजज्ञिष्व जनजन
ने कर्मव्यतिहारे आत्मनेपदम् व्यतिपूर्वो अपि लङ् स्वरा
त्वादेशेति लङ् द्विर्वे अनेनेट् गमहनेत्युपधालोपः
तवर्गस्य टेति नस्य जः सेर्गमः परस्मै गम्लृ गता
वित्यस्मात्परस्मैपदविषये सकारादौ प्रत्यये परे इट् भव
ति जिगमिषति अगमिष्यत् गन्तुमिच्छतीति सन् इट्
द्विर्वचनादि विगतिकिम् संजिगंसते संगंस्यते सङ्गन्त
मिच्छति समो गम्यृच्छीत्यात्मनेपदम् हनृदन्ता
त्स्ये हन हिंसागत्योरित्यस्मात् ऋकारान्ताच्च धातोः
स्यशब्दे परे इट् भवति हनिष्यति हनिष्यते करिष्यते क

रिष्यते हलन्तलक्षणादिति किम् पक्ष्यति अञ्जेः सिचि
अनक्तेः सिचि अमात्रानित्यमिड्स्यात् अञ्जेः सिचि परे इट्
भवति इट ईटि सिचो लोपः आञ्जीत् आञ्जिष्टा
म् आञ्जिषुः अयतादि ताम् अन् सिच् विशयये सिचइती
ट् इट ईटीति सिज्लोपः अनड्स् अवर्णस्याकारः वर्णी
वर्णान्त इति न स्मरः स्तुसुधूञ्भ्यः परस्मै स्तुञ्
स्तौ षुञ् अभिषवे षू प्रसवैश्वर्ययोरिति वा धूञ् कम्प
ने एभ्यः सिचि परस्मैपदे परे इट् भवति अस्तावीत् अ
सावीत् अधावीत् अट् दि सिच् इट् ईट् इट ईटीति
सिज्लोपः सिचि परस्मैपदेष्विति वृद्धिः परस्मैपदेष्विति किम् अ
स्तोष्ट असोष्ट अधोष्ट अधविष्ट अट् त सिच् धूञः प
ते इट् आगमः यमरमनमातां सक्च
यम उप रमु क्रीडायाम् णम प्रह्वत्वे आकारान्तानां
च धातूनां सिचि परस्मैपदे परे इट् भवति तस्मात् एषां
सकारागमश्च अयंसीत् अयंसिष्टाम् अयंसिषुः अरं
सीत् अरंसिष्टाम् अरंसिषुः अनंसीत् अनंसिष्टाम् अ
नंसिषुः अयासीत् अयासिष्टाम् अयासिषुः याप्रापणे
अट् दि ताम् अन् सिच् इट् सकारागमश्च ईट् सिज्लो
पः मस्यानोरनुस्वारः स्मिपूङ्रञ्ज्वशूकृगृदृ
धृप्रच्छां सनि स्मिङ् ईषद्धसने पूङ् पवने ऋ गति
प्रापणयोः ऋ सृ गताविति वा अञ्जू व्यक्तिः अशू
व्याप्तौ कृ विक्षेपे गृ निगरणे गृ शब्दे इति वा दृङ् आद
रे धृङ् अवस्थाने प्रच्छ ज्ञीप्सायाम् एषां सनि परे इट्

भवति किउः इवर्णाद्वश्विश्रिडीशीङ्भ्य इति निषेधः प्राप्तः
शिशयिषते पिपतिषते अरिरिषति अञ्जिजिषति अ
शिशिषति चिकरिषति जिगरिषति दिदरिषते दिधरि
षते पिपृच्छिषति विस्मयितुमिच्छति पतितम् धर्षितम्
अञ्जितम् अशितम् करितम् गरितम् दरितम् धर्तम्
पृच्छितुमिच्छतीति सन् यदि स्वपिप्रच्छ्योः सनीति ग्रहणेः संप्र
अनेन इट् स्मयादीनां द्वितीयस्यैकस्वरस्य द्वि त्वि सि स
निह्नवं मूढः अभ्यासस्य उवर्णस्य जान्तस्थोपि इत्यत्र म्

**इटो दीर्घो ग्रहेरपरोक्षायाम्** ग्रहधातोः परस्
स्यात्परस्य इटो दीर्घो भवति अपरोक्षायां परोक्षायां
यइट् तस्य न भवतीत्यर्थः ग्रहीता ग्रहीतुम् ग्रहीत
व्यम् गाढम् गृह्यः इट् अनेन इटो दीर्घः अपरोक्षायामि
ति किम् जगृहिथ जगृहिव जगृहिम परोक्षायाम् अ
म इह वमयोरग्रहित्येतिसंज्ञ **आनिडेकस्वरादातः**
आतः आकारान्तात् एकस्वराद्धातोः परस्य थपः
अनिड् भवति इड् न भवतीत्यर्थः याता यास्यति एकस्व
रादिति किम् दरिद्रिता दरिद्रिष्यति दरिद्रातेरसार्व
धातुके इत्यालोपः **इवर्णाद्श्विश्रिडीशीङः**
इवर्णादेकस्वरात् धातोः परस्यास्तादिप्रत्ययस्य इट् न भ
वति डुक्रीञोश्चिगाति ह्वञोः श्विञ् सेवायाम् डीङ् विहाय
सागतौ शीङ् स्वप्ने एतान्वर्जयित्वा चेता नेता एकस्वरा
दिति किम् दीधिता दीधीवेव्योरिवर्णयकारयोरिति इ
कारलोपः श्वयिता श्रिरिडिं सार्थः आशिश्रिडीशीङः इ

तिकिम् शयिता श्रयिता डयिता शायिता ग्रस्ताः **उतोऽयुरुक्ष्णुस्नुक्ष्णुवः** उकारान्तात् एकस्वराद्धातोः परस्य असार्वधातुकस्य इट् न भवति युमिश्रणे रु शब्दे णु स्तवे क्षु शब्दे स्नु प्रस्रवणे क्ष्णु तेजने एतान्वर्जयित्वा स्नोता एकस्वरादितिकिम् ऊर्णुविता अयुरुक्ष्णुस्नुक्ष्णुव इतिकिम् यविता रविता नविता स्नविता क्षविता क्ष्णविता **ॠतोऽवृङ्वृञः** ॠवर्णान्ताद्धातोः एकस्वरात्परस्य असार्वधातुकस्य इट् न भवति वृङ् संभक्तौ वृञ् वरणे एतौ वर्जयित्वा कर्ता हर्ता स्तरिता ग्रस्ताः एकस्वरादितिकिम् जागरिता अवृङ्वृञ इतिकिम् वरिष्यते वरीष्यते वरिष्यति वरीष्यति इडन्तवृङ्वृञोऽनहादिदीर्घो विभाषया इति वा तदा दीर्घः **शाकेः कात्** शाक विभाषितो मर्षणे शाक्रु शाक्नावितिवा अस्मात्परस्य असार्वधातुकस्य इट् न भवति कादितिककारान्तानां मध्यात् शाकेरेवन्यर्थः एवं चात् छात् जात् दात् इत्यादिषु सेयम् शाक्ता **पचिवचिसिचिरिचिविचिमुचेश्चात्** डुपचँष् पाके वच भाषणे षिच क्षरणे रिचिर् विरेचने विचिर् पृथग्भावे मुच्लृ मोचने एभ्यः परस्यासार्वधातुकस्य इट् न भवति पक्ता वक्ता सेक्ता रेक्ता वेक्ता मोक्ता **प्रच्छेश्चात्** प्रच्छ ज्ञीप्सायाम् अस्मात्परस्य असार्वधातुकस्य इट् न भवति प्रष्टा ब्रश्चोऽयं निषेधः नो वर्णस्य घटेति न स्पष्टः **अञ्जिभञ्जिरञ्जिभजि**

भञ्जिभ्रस्जिभुजियजिसृजिमस्जित्यजिस्व
जिनिजिविजिसञ्जेर्नेट्  युजिर् योगे युजसमा
धाविति वा रुजो भङ्गे रुज रोगे भज सेवायाम् भञ्जो आ
मर्दने भ्रस्ज पाके भुज पालनाभ्यवहारयोः भुज कौटिल्ये
इति वा यज देवतापूजा षञ्ज परिष्वङ्गे टुमस्जो शुद्धौ त्यज
हानौ सृज विसर्गे णिजिर् शौचपोषणयोः विजिर् पृथ
ग्भावे षञ्ज सङ्गे एभ्यः परस्य असार्वधातुकस्य इट् न भ
वति योक्ता रोक्ता सक्ता भक्ता भङ्क्ता भ्रष्टा भर्ष्टा भ्रस्जेः
भ्रस्जादीनां षड्गतिनिर्देशाद्वा भृज्जादेशः भ्रष्टा इत्यत्र
स्कोः संयोगाद्योरिति सलोपः भोक्ता यष्टा परिषक्ता
मङ्क्ता त्यक्ता स्रष्टा सृजिदृशोरागमकारः मस्जादीनां
षः नेक्ता वेक्ता सङ्क्ता  तुदिस्विदिनुदिविद्यतिवि
द्यतिविन्दतिविनत्तिक्षुदिछिदिभिदिपादिसदिस्व
दिस्कन्दिहदिशदिविदेर्नेट्  तुद व्यथने णुद प्रे
रणे क्षुदिर् संपेषणे ष्विदा गात्रप्रक्षरणे विद सत्ताया
म् विद्लृ लाभे मुचादेरागमो नकारः विद विचारणे स्क
शत्रुथादेः परोनपादः छिदिर् द्वैधी भिदिर् विदा पा
दूशातने षद्लृ विशा पद गतौ स्कन्दिर् शोषणे हद पु
रीषोत्सर्गे अद भक्षणे विद वेदने खिद परिताप इति वा
एभ्यः परस्यासार्वधातुकस्य इट् न भवति तोत्ता नोत्ता
तोत्ता स्वेत्ता वेत्ता वेत्स्यते क्षोत्ता भेत्ता शत्ता सत्ता पत्ता
स्कन्ता हन्ता अत्ता वेत्ता वेत्तिर्ज्ञानार्थः सेट् वेदिता
तपिकपिक्षिपितपिवपिस्वपिलिप्यतितृपि

त्वा गत्वा   रिषिरुषिक्रुशिविषिलिषिद्वि
षिदृशिस्पृशिमृशिदंशोः षात्   रिषिरु
षादिस्वार्थः क्रुशआह्वाने रोदनेच विशप्रवेशने लि
शअवयवे द्विषअप्रीतिसर्जने दृशिर्प्रेक्षणे स्पृशसं
स्पर्शे मृशआमर्शने दंशदशने एभ्यः परस्यार्द्धधा
तुकस्य इट्नभवति रेष्टा रोष्टा क्रोष्टा वेष्टा लेष्टा दे
ष्टा द्रष्टा स्प्रष्टा म्रष्टा अनुदात्तस्य चर्दुपधस्यान्यतर
स्यामिति वाअकारागमः स्पर्ष्टा मर्ष्टा दंष्टा   सिधि
प्रच्छितृपिक्षिपिलिपिदिहिविपिपिषिविषिशिषिविशु
षिवषिछिदुः षेः षात्   त्विषदीप्तौ शुषशोषे कृष
विलेखने श्लिषआलिङ्गने द्विषअप्रीतौ पिषृसंचूर्णने
विष्लृव्याप्तौ शिष्लृसर्वोपयोगे तुषप्रीतौ दुषवै
कृत्ये एभ्यः परस्यार्द्धधातुकस्य इट्नभव
ति त्वेष्टा पोष्टा कृष्टा कर्ष्टा अमृदकारागमः श्लेष्टा
द्वेष्टा पेष्टा वेष्टा पोष्टा शोष्टा तोष्टा दोष्टा   वस
तिघसेः सात्   वसनिवासे घसलृअदने अदेर्घस्लृ
वा आभ्यां परस्यार्द्धधातुकस्य इट्नभवति वस्ता घ
स्ता जिघत्सति अत्तुमिच्छति सन् अदेर्घस्लृ सस्यसे
सार्द्धधातुकेतः द्वित्वं अभ्यासकार्यम् सन्यतोऽसीति
इत्वम् वसतीति श्तिपानिर्देशात् वसआच्छादने इत्य
स्यात्विकरणस्यनभवतीति विशेषः वसितावस्त्रम्
दहिदिहिदुहिमिहिरुहिलिहिनहिवहेर्हो
त्   दहभस्मीकरणे दिहउपचये दुहप्रमिहसेचने

हृद्बीजजन्मनि लिङ्ण्यासादने लाहवन्धने यद्दशाप
ते एभ्यः परस्य सार्वधातुकस्य इट् न भवति दध्या दे
ध्या दाम्या दादेर्घ इति ह्रस्वः वदधभेभ्य इति तस्य
धः धुटां तृतीयश्चतुर्थे मेद्धा रोद्धा लेढा नद्धा दोग्ध
नद्धेधः प्राग्वत् ढत्वतृतीयौ वोढा मदिवदादेर्दस्यो
स्य ढत्वधत्वढवर्गलोपाः प्राग्वत् **ग्रहगुहोः स**
**नि** ग्रह उपादाने गुह संवरणे अनयोः सनि परे इ
ट् न भवति जिघृक्षति जुघुक्षति ग्रहिस्वपिप्रच्छामिति
संप्रसारणं घढोः कः सनीति किम् ग्रहीता इटो दीर्घः
गूहिता गोहेरूदुपधायाः **उवर्णश्र्यादिभ्य**
**श्च** उवर्णान्तेभ्यः धातुभ्यः श्र्यादिभ्यो यमिस्मित
मान्वधदानशान् एभ्यश्च सनि परे इट् न भवति उव
र्णान्तेभ्यस्तावत् रुरूषति तुतूषति युयूषति सु
सूषति स्वरान्तानां सनीति दीर्घः श्र्यादिभ्यः जुगुप्स
ते तितिक्षते चिकित्सते मीमांसते बीभत्सते दीदांस
ते शीशांसते **भुवः सिज्लुकि** भूसत्तायामि
त्यस्य सिज्लुकि सति परस्य सार्वधातुकस्य इट् न भव
ति अभूत् अभूः इत्यादि भवतीति सिचो लुक् सिज्लु
कीति किम् व्यत्यभविष्ट कर्तरि कर्मव्यतिहारे आत्मने
पदम् **कृसृभृस्तुद्रुस्रुश्रुवपवपरोक्षाया**
**म्** डुकृञ् करणे सृगतौ डुभृञ् धारणपोषणयोः
ष्टुञ् भाषणे इति वा द्रु इति द्रु गतौ स्रुञ् स्तुतौ
द्रु गतौ स्रु गतौ श्रु गतौ एषामेव परोक्षायां परस्याम्

मिव इट ईट् इटश्चेटीति सिलोपः अडागमादि
ह्यस्तन्यद्यतनीक्रियातिपत्तिषु धातोरादेर
डागमो भवति ह्यस्तन्यद्यतनीक्रियातिपत्तिषु परा
सु अपचत् अपाक्षीत् अपक्ष्यत् अपचत अपक्त अप
क्ष्यत ह्यस्तन्यादिष्विति किम् पचति स्वरादीनां वृ
द्धिरादेः स्वरादीनां धातूनां ह्यस्तन्यादिषु परासु
आदेर्वृद्धिर्भवति ऐच्छत् ऐहत ऐधत ऐक्षत इच्छा
यां ईह चेष्टायाम् उपदादेः इत्यादिति के ह्यस्तन्यादि न प
वम् ऐषीत् ऐक्षिष्ट अस्तेर्ह्यस्याकारः अ
देरित्येव आदेर्वर्णस्य आकारो भवति ह्यस्तन्यादिषु
परासु आसीत् ह्यस्तनीति आस्तिक अस्तेरिर्दस्योरितीट्
आपत् आस्थित् आस्तां आसौ अथ दि उपादि सत्वेऽला
ए अटपटगानां क्रियातिपत्तिः स्यात् इट् अस्तेः
असभुवीत्यस्य ह्यस्तन्यां परस्यां आदेर्वर्णस्य आकारो
भवति पूर्वेणासिद्धे अस्तेरादेरिति ग्रासस्य आदिलोप
स्य बाधार्थं वचनम् आस्ताम् आसन् ह्यस्तनाम् अन्
आन्वितरूप पत्वेऽर्थ इणागमादिस्यस्ययोर्यकारस्याक्षिप
रे आकारआगमो भवति आयन् इणाग ह्यस्त अन्
आन्वित्तक इणोऽपेति यत्वम् अनेनाकारागमः
माङ्माङ्स्मयोगे माङ्शब्देन माङ्स्मशब्देन च यो
गसति धातोः ह्यस्तन्यादिषु अकारागमादि यदुक्तं तन्न
भवति मा पाक्षीत् मा स्म पचत् मा इक्षिष्ट मा स्म ईक्षत
माङ्योगे अथ न मास्मयोगे ह्यस्तनी न मास्मस्तास ।

मित्यादिवकारस्य
प्रसारणसंज्ञास्यात् नसंप्रसारणा
संप्रसारणंनस्यात्   अपूर्वेसन्ध्यक्षरेगुणः
अवर्णोअएइत्यत्रयः अर्थाद्गुः तस्मात्पूर्वेयसन्ध्यक्ष
रे अवर्णाइवर्णेए उवर्णेओ इत्येकारउकारौतेगुण
संज्ञाभवन्ति गुणसंज्ञयाःप्रयोजनम् नाम्यन्तयो
धातुविकरणयोर्गुणः इत्यादिषु चेता स्तोता कर्ता
अकारेचवृद्धिः   अतिवर्तमानमर्थवशाद
ध्यस्तज्ञायते अर्थाद्गुः पूर्वसूत्रनिर्दिष्टादवर्णे
सन्ध्यक्षरे एकारेऐकारेच ओकारेऔकारेचेति ऐ
कारऔकारौचवृद्धिसंज्ञाभवन्ति वृद्धिसंज्ञयाःप्रयो
जनम् वृद्धिरादौसणेइत्यादिषु कार्पणम् वैडालम्
औपगवम् यस्यापत्यस्येति ... आकारस्यापिवृद्धि
संज्ञावाच्यः   इतिलघुबोधेवाख्यातप्रक
रणेप्रसादोद्गमः ८   आख्यातप्रकरणं
समाप्तम्
नोट्रप्यकश्मीर यन्त्रालयमेछापा लिखितंपण्डित
हरीरामेण संवत् २४ २४ शुभमस्तुसर्वजगताम् ॐ

